देवी प्रणवरूपोऽसौ पातु नित्यं शिवा मम ।
ओष्ठाधरं शक्तिबीजात्मिका स्वाहास्वरूपिणी ॥ १० ॥
पायान्मे कालसन्दर्भा पञ्च रश्मिस्वरूपिणी ।
गलदेशं महारौद्री पातु मे चापराजिता ॥ ११ ॥
च्रौं बीजं मे तथा कण्ठं रुद्राणी स्वाहयान्विता ।
हृदयं भैरवी विद्या पातु षोड़श सुस्वरा ॥ १२ ॥
द्वौ बाहू पातु सर्वत्र महालक्ष्मीः प्रधानिका ।
सर्वमन्त्रस्वरूपा मे चोदरं पीठनायिका ॥ १३ ॥
पार्श्वयुग्मं तथा पातु कुमारी वाग्भवात्मिका ।
कैशोरी कटिदेशं मे मायाबीजस्वरूपिणी ॥ १४ ॥
जङ्घायुग्मं जयन्ती मे योगिनी कुल्लुकायुता ।
सर्वाङ्गमम्बिका देवी पातु मन्त्रार्थगामिनी ॥ १५ ॥
केशाग्रं कमला देवी नासाग्रं विन्ध्यवासिनी ।
चिबुकं चण्डिका देवी कुमारी पातु मे सदा ॥ १५ ॥
हृदयं ललिता देवी लिङ्गं गुह्यं सदावतु ।
श्मशाने चाम्बिका देवी गङ्गागर्भे च वैष्णवी ॥ १७ ॥
शून्यागारे पञ्चमुद्रा मन्त्रयन्त्रप्रकाशिनी ।
चतुष्पथे तथा पातु मामिव वज्रधारिणी ॥ १८ ॥
शवासनगता चण्डा मुण्डमालाविभूषिता ।
पातु मामेकलिङ्गे च येश्वरी शक्तिरूपिणी ॥ १९ ॥
वने पातु महाबाला महारण्ये रणप्रिया ।
महाजले तड़ागे च शत्रुमध्ये सरस्वती ॥ २० ॥
महाकाशपथे पृथ्वी पातु मां शीतला सदा ।
रणमध्ये राजलक्ष्मीः कुमारीकुलकामिनी ॥ २१ ॥
अर्द्धनारीश्वरा पातु मम पादतलं मही ।
नवलक्षमहाविद्या कुमारीरूपधारिणी ॥ २२ ॥

कोटिसूर्य्यप्रतीकाशा चन्द्रकोटिसुशीतला ।
पातु मां वरदा वाणी वटुकेश्वरकामिनी ॥ २३ ॥
इति ते कथितं नाथ ! कवचं परमाद्भुतम् ।
कुमार्य्याः कुलदायिन्याः पञ्चतत्त्वार्थपारग ! ॥ २४ ॥
यो जपेत् पञ्चतत्त्वेन स्तोत्रेण कवचेन च ।
आकाशगामिनी सिद्धिर्भवेत्तस्य न संशयः ॥ २५ ॥
वज्रदेही भवेत् क्षिप्रं कवचस्य प्रपाठतः ।
सर्वसिद्धीश्वरो योगी ज्ञानी भवति यः पठेत् ॥ २६ ॥
विवादे व्यवहारे च संग्रामे कुलमण्डले ।
महापथे श्मशाने च योगसिद्धो भवेत् स च ॥ २७ ॥
पठित्वा जयमाप्नोति सत्यं सत्यं कुलेश्वर ! ।
वशीकरणकवचं सर्वत्र जयदं शुभम् ॥ २८ ॥
पुण्यव्रती पठेन्नित्यं मतिश्रीमान् भवेद् ध्रुवम् ।
सिद्धविद्या कुमारी च ददाति सिद्धिमुत्तमाम् ॥ २९ ॥
पठेद् यः शृणुयाद्वापि स भवेत् कल्पपादपः ।
भक्तिमुक्तिं तुष्टिपुष्टिराजलक्ष्मीसुसम्पदम् ॥ ३० ॥
प्राप्नोति साधकश्रेष्ठो धारयित्वा जपेद् यदि ।
असाध्यं साधयेद्विद्वान् पठित्वा कवचं शुभम् ॥ ३१ ॥
धनिनाञ्च महासौख्य धर्मार्थकाममोक्षदम् ।
यो वशी दिवसे नित्यं कुमारीं पूजयेन्निशि ॥ ३२ ॥
उपचारविशेषेण त्रैलोक्यं वशमानयेत् ।
पललेनासवेनापि मत्स्येन मुद्रया सह ॥ ३३ ॥
नानाक्षोभभवान्येव गन्धद्रव्याणि साधकः ।
अनेन स्वर्णरजतालङ्कारेण सुचेलकैः ॥ ३४ ॥
पूजयित्वा जपित्वा च तर्पयित्वा वराननाम् ।
यज्ञदानतपस्याभिः प्रयोगेण महेश्वर ! ॥ ३५ ॥

स्तुत्वा कुमारीकवचं यः पठेदेकभावतः।
तस्य सिद्धिर्भवेत् चिप्रं राजराजेश्वरो भवेत् ॥ ३६ ॥
वाञ्छार्थफलमाप्नोति यद् यन्मनसि वर्त्तते।
भूर्जपत्रे लिखित्वा च कवचं धारयेद् यदि ॥ ३७ ॥
शनिमङ्गलवारे च नवम्यामष्टमीदिने।
चतुर्दश्यां पौर्णमास्यां कृष्णपचे विशेषतः ॥ ३८ ॥
लिखित्वा धारयेद्विद्वान् उत्तराभिमुखो भवन्।
महापातकयुक्तो हि मुक्तः स्यात् सर्वपातकैः ॥ ३९ ॥
योषिद्वामभुजे धृत्वा सर्वकल्याणमालभेत्।
बहुपुत्रान्विता कान्ता सर्वसम्पत्तिसंयुता ॥ ४० ॥
तथा श्रीपुरुषश्रेष्ठो दचिणे धारयेद् भुजे।
ऐहिके दिव्यदेहः स्यात् पञ्चाननसमः प्रभुः ॥ ४१ ॥
शिवलोके परे याति वायुवेगी निरामयः।
सूर्य्यमण्डलमाभेद्यं परं लोकमवाप्नुयात् ॥ ४२ ॥
लोकानामतिसौख्यदं भयहरं श्रीपादभक्तिप्रदम्।
मोचार्थं कवचं शुभं प्रपठतामानन्दसिन्धूद्भवम् ॥ ४३ ॥
पार्थानां कलिकालघोरकलुषध्वंसैकहेतुं जयम्।
ये नाम प्रपठन्ति धर्ममतुलं मोचेन्द्र यान्ति चणात् ॥४४॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्य्युपचर्य्या-
विन्यासे कुमारिकवचोल्लासे सिद्धमन्त्रप्रकरणे दिव्य-
भावनिर्णये नवमः पटलः ॥ ९ ॥

---

## अथ दशमः पटलः।

आनन्दभैरव उवाच। वद कान्ते! सदानन्दस्वरूपानन्दवल्लभे!
कुमार्य्या देवता मुक्ताः परमानन्दवर्द्धनम् ॥ १ ॥
अष्टोत्तरसहस्राख्यं नाममङ्गलमद्भुतम्।

यदि मे वर्त्तते विद्ये यदि स्नेहकथामला ॥ २ ॥
तदा वदस्व कौमारीकृतकर्मफलप्रदम् ।
महास्तोत्रं कोटि कोटि कन्यादानफलं लभेत् ॥ ३ ॥
आनन्दभैरव उवाच ।
महापुण्यप्रदं नाथ ! शृणु सर्वेश्वर ! प्रिये ! ।
अष्टोत्तरसहस्राख्यं कुमार्य्याः परमाद्भुतम् ॥ ४ ॥
पठित्वा धारयित्वा वा नरो मुच्येत सङ्कटात् ।
सर्वत्र दुर्लभं धन्यं धन्यलोकनिषेवितम् ॥ ५ ॥
अणिमाद्यष्टसर्वाङ्गसर्वानन्दकरं परम् ।
मायामन्त्रनिरस्ताङ्गं मन्त्रसिद्धिप्रदं नृणाम् ॥ ६ ॥
न पूजा न जपं स्नानं पुरश्चर्य्याविधिश्च न ।
अस्मात् सिद्धिमवाप्नोति सहस्रनामपाठतः ॥ ७ ॥
सर्वयज्ञफलं नाथ ! प्राप्नोति साधकः क्षणात् ।
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रास्वरूपकम् ॥ ८ ॥
कोटिवर्षशतेनापि फलं वक्तुं न शक्यते ।
तथापि वक्तुमिच्छामि हिताय जगतां प्रभो ! ॥ ९ ॥
अस्याः श्रीकुमार्य्याः सहस्रनामकवचस्य वटुकभैरवऋषि-रनुष्टुप्छन्दः कुमारी देवता सर्वमन्त्रसिद्धिसमृद्धये विनियोगः।
ओं कुमारी कौशिकी काली कुरुकुल्ला कुलेश्वरी ।
कनकाभा काञ्चनाभा कमला कालकामिनी ॥ १० ॥
कपालिनी कालरूपा कौमारी कुलबालिका ।
कान्ता कुमारकान्ता च कारणा करिगामिनी ॥ ११ ॥
कन्धकान्ता कौलकान्ता कृतकर्मफलप्रदा ।
कार्य्याकार्य्यप्रवरधा कंसहन्त्री कुरुक्षया ॥ १२ ॥
कृष्णकान्ता कालरात्रिः कर्णपुधारिशोकरा ।
कामहा कपिला काला कालिका कुरुकामिनी ॥ १३ ॥

कुरुक्षेत्रप्रिया कौला कुन्ती कामातुरातुरा।
कलङ्कभक्षा कैकेयी काकपुच्छध्वजा कला ॥ १४ ॥
कमला कामलक्ष्मीश्च कमलाननकामिनी।
कामधेनुस्वरूपा च कामहा कामवर्द्धिनी ॥ १५ ॥
कामदा कामपूज्या च कामातीता कलावती।
कौमारी कारणाढ्या च कैशोरी कुशलाकुला ॥ १६ ॥
कम्बुग्रीवा कृष्णनिभा कामराजप्रियावतिः।
कङ्कणालङ्कृता कङ्का केवला काकिनी किरा ॥ १७ ॥
किरातिनी काकभक्षा करालवदना कुशा।
केशिनी केशिहा केशा केशोष्टा च कविप्रिया ॥ १८ ॥
कविनाथस्वरूपा च कटुवाणी कटुस्थिता।
कोटरा कोटराक्षी च कटनाटकवासिनी ॥ १९ ॥
कटकस्था काष्ठसंस्था कन्दर्पा केतकीप्रिया।
केलिप्रिया कम्बलस्था कालदैत्यविनाशिनी ॥ २० ॥
केतकीपुष्पशोभाढ्या कर्पूरपूर्णजिह्विका।
कर्पूरकरकाकोला कैलासगिरिवासिनी ॥ २१ ॥
कुशासनस्था कादम्बा कुञ्जरेशी कुलानना।
खर्वा खड्गधरा खड्गखिलहा खलुवर्द्धिदा ॥ २२ ॥
खञ्जना खररूपा च खाराम्लतिक्तमध्यगा।
खेलना खेटककरा खरवाक्या खरोत्कटा ॥ २३ ॥
खद्योतचञ्चला खेला खद्योता खगवाहिनी।
खेटकस्था खलाखस्था खेचरी खेचरप्रिया ॥ २४ ॥
खचरा खचरप्रेमा खलाढ्या खचरानना।
खेचरेशी खरोग्रा च खेचरप्रियभाषिणी ॥ २५ ॥
खर्जुरासवसंवर्त्ता खर्जूरफलभोगिनी।
खातमध्यस्थिता खाता खाताम्बुपरिपूजनी ॥ २६ ॥

ख्यातिः खातजलानन्दा खुलना खञ्जनागतिः ।
खल्वा खरतरा खारी खारोद्वेगनिकृन्तनी ॥ ३७ ॥
गगनस्था च भीता च गभीरनादिनी गया ।
गङ्गा गभीरा गौरी च गणनाथप्रिया गतिः ॥ ३८ ॥
गुरुभक्ता ग्लानिहीना गेहिनी गोपिनी गिरा ।
गोगणस्था गाणपत्या गिरिजा गिरिपूजिता ॥ ३९ ॥
गिरिकान्ता गणस्था च गिरिकन्या गणेश्वरी ।
गाधिराजसुता ग्रीवा गुर्वी गुर्वश्वशाङ्करी ॥ ४० ॥
गन्धर्वयामिनी गीता गायत्री गुणदा गुणा ।
गुग्गुलुस्था गुरोः पूज्या गीतानन्दप्रकाशिनी ॥ ४१ ॥
गयासुरप्रिया गेहा गवाक्षजालमध्यगा ।
गुरुकन्या गुरोः पत्नी गहना गुरुनागिनी ॥ ४२ ॥
गुल्फवायुस्थिता गुल्फा गर्दभा गर्दभप्रिया ।
गुह्या गुह्यगणस्था च गरिमा गौरिका गुदा ॥ ४३ ॥
गुदोर्द्धस्था च गलिता गणिका गोलका गणा ।
गान्धर्वी गाननगरी गन्धर्वगणपूजिता ॥ ४४ ॥
घोरनादा घोरमुखी घोरा घर्मनिवारिणी ।
घनदा घनवर्णा च घनवाहनवाहना ॥ ४५ ॥
घर्घरध्वनिचपला घोटा घटपटीघटी ।
घटिता घट्टना घोना घनरूपा घनेश्वरी ॥ ४६ ॥
घृणातीता घर्घरा च घोराननविमोहिनी ।
घोरनेत्रा घनरुचा घोरभैरवकन्यका ॥ ४७ ॥
घाता घातकहा घात्या घ्राणा घ्राणे गवायवी ।
घोरान्धकारसंस्था च घसना घस्वरा घरा ॥ ४८ ॥
घोटकस्था घोटका च घोटकेश्वरवाहना ।
घननीलमणिश्यामा घर्घरेश्वरकामिनी ॥ ४९ ॥

ङकारकूटसम्पन्ना ङकारचक्रगामिनी ।
ङकारी ङसशा चैव ङोपनीता ङकारिणी ॥ ५० ॥
चन्द्रमण्डलमध्यस्था चतुरा चारुहासिनी ।
चारुचन्द्रमुखी चैव चलाङ्गसुगतिप्रिया ॥ ५१ ॥
चञ्चला चपला चण्डी चेकिताना चरुस्थिता ।
चलिता चालना चार्वी चारुभ्रमरनादिनी ॥ ५२ ॥
चोहरा चन्द्रनिलया चेन्द्री चक्रपुरस्थिता ।
चक्रकीला चक्ररूपा चक्रस्था चक्रसिद्धिदा ॥ ५३ ॥
चक्रिणी चक्रहस्ता च चक्रनाथकुलप्रिया ।
चक्राभेद्या चक्रकुला चक्रमण्डलशोभिता ॥ ५४ ॥
चक्रेश्वरप्रिया चेला चेलाजिनकुशोत्तरा ।
चतुर्वेदस्थिता चण्डा चन्द्रकोटिसुशीतला ॥ ५५ ॥
चतुर्गुणा चन्द्रवर्णा चातुरी चतुरप्रिया ।
चक्षुःस्था चक्षुर्वसतिश्चलका चलनप्रिया ॥ ५६ ॥
चार्वङ्गी चन्द्रनिलया चलदम्बुजलोचना ।
चर्वरीशा चारुमुखी चारुदन्ता चरस्थिता ॥ ५७ ॥
चसकस्थासवा चेता चेतःस्था चैत्रपूजिता ।
चाक्षुषी चन्द्रमलिनी चन्द्रहासमणिप्रभा ॥ ५८ ॥
छत्रस्था छत्ररूपा च छत्रच्छायावनस्थिता ।
छलज्ञा छेश्वरा छाया छाया छिन्नशवा छला ॥ ५९ ॥
छत्राचरणशोभाढ्या छत्रिणां छत्रधारिणी ।
छिन्नातीता छिन्नमस्ता छिन्नकेशा छलोद्भवा ॥ ६० ॥
छलहा छलदा छाला छन्ना छन्नजनप्रिया ।
छला छला छम्भवती छम्भसम्बनिवासिनी ॥ ६१ ॥
छद्मगन्धा छदा छन्ना छद्मवेशा छकारिका ।
छागलारक्तभक्षा च छागलामोदरक्तपा ॥ ६२ ॥

छगलण्डेशकन्या च छगलण्डकुमारिका ।
छविका छुरिककरा छुरिकारिविनाशिनी ॥ ६३ ॥
छिन्ननाशा छिन्नहासा छोललोला छलोदरी ।
छलोद्वेगा छागरीजमाला छाङ्गवरप्रदा ॥ ६४ ॥
जटिला जठरश्रीदा जरा जन्मप्रिया जया ।
जन्मस्था जीवजा जीवा जयदा जीवयोगदा ॥ ६५ ॥
जयिनी जामलस्था च जामलोद्भवनायिका ।
जामलप्रियकन्या च जामलेशी जवाप्रिया ॥ ६६ ॥
जवाकोटिसमप्रख्या जवापुष्पप्रिया जना ।
जलस्था जागरिमया जरातीता जलस्थिता ॥ ६७ ॥
जीवहा जीवकन्या च जनार्दनकुमारिका ।
जतुका जलपूज्या च जगन्नाथादिकामिनी ॥ ६८ ॥
जीर्णाङ्गी जीर्णहीना च जीमूतात्यन्तशोभिता ।
जामदा जमदा जृम्भा जृम्भणान्तादिधारिणी ॥ ६९ ॥
जयन्था जारजप्रीता जगदानन्दवर्द्धिनी ।
जमलार्जुनदर्पघ्नी जमलार्जुनभञ्जिनी ॥ ७० ॥
जयत्रिजगदानन्दा जामलोल्लाससिद्धिदा ।
जपमाला जाप्यसिद्धिर्जपयज्ञप्रकाशिनी ॥ ७१ ॥
जाम्बुवती जाम्बुवतः कन्यकाजलजाजपा ।
जवाहन्त्री जगद्बुद्धिर्जगत्कर्त्री जगद्गतिः ॥ ७२ ॥
जवनी जीवनी जाया जगन्माता जनेश्वरी ।
झञ्झना झञ्झमध्यस्था झणत्कारस्वरूपिणी ॥ ७३ ॥
झणत् झणद्वङ्किरूपा झननाझल्वरीश्वरी ।
झटिताद्या झरा झञ्झा झर्झराधरकन्यका ॥७४॥
झणत्कारी झना झना झकारमालयावृता ।
झङ्कारी झर्झरी झस्री झल्वेश्वरनिवासिनी ॥ ७५ ॥

अकारी अकिराती च अकारवीजमालिनी।
अनमोऽन्ता अकारान्ता अकारपरमेश्वरी ॥ ७६ ॥
आन्तवीजपुत्रकरा अेकनेत्रैककामिनी।
अेकनेत्रा अस्वरूपा अह्वारा अहरीतकी ॥ ७७ ॥
टुण्टुनी टङ्कहस्ता च टान्तवर्गा टलावती।
टपलाटालवालाख्या टङ्कारध्वनिरूपिणी ॥ ७८ ॥
टलाती टाचराचीता टिल्कारादिकुमारिका।
टाङ्कास्त्रधारिणी टाना टमोटार्णलभाषिणी ॥ ७९ ॥
टङ्कारीनिधना टाका टकाटकविमोहिनी।
टङ्कारधरनामाह्वा टिवीखेचरनादिनी ॥ ८० ॥
ठठङ्कारी ठाठरूपा ठकारवीजकारणा।
डमरुप्रियवाद्या च डामरस्था डरीजिका ॥ ८१ ॥
डान्तवर्गा डमरुका डरस्था डोरडामरा।
डगरार्द्धा डलातीता डदारुकेश्वरी डुता ॥ ८२ ॥
ढार्द्धनारीश्वरा ढामा ढक्कारी ढलना ढला।
ढकस्था ढेश्वरसुता ढेमनाभावढोनना ॥ ८३ ॥
णोमाकान्तेश्वरी णान्तवर्गस्था णतुनावती।
णनोमालङ्ककल्याणी णाचवीणाचवीजिका ॥ ८४ ॥
तुलसी तन्तुसूक्ष्माख्या तारख्या तैलगन्धिका।
तपस्या तापससुता तारिणी तरुणी तला ॥ ८५ ॥
तन्त्रस्था तारकब्रह्मस्वरूपा तन्तुमध्यगा।
तालभचविधामूर्त्तिस्तारका तैलभच्चिका ॥ ८६ ॥
तारोभ्रा तालमाला च तकरा तिन्तिड़ीप्रिया।
तपसः तालसन्दर्भा तर्जयन्तीकुमारिका ॥ ८७ ॥
तोकाचारा तलोद्वेगा तचका तचकप्रिया।
तचकालङ्कृता तोषा तावद्रूपा तलप्रिया ॥ ८८ ॥

तलास्त्रधारिणी तापा तपसां फलदायिनी ।
तत्त्वस्त्वप्रहरालीता तलारिगणनाशिनी ॥ ८९ ॥
तुला तौली तोलका च तलस्था तलपालिका ।
तरुणातमबुद्धिस्था स्तम्भाप्रधारिणी तपा ॥ ९० ॥
तन्त्रप्रकाशकरणी तन्त्रार्थदायिनी तथा ।
तुषारकिरणाङ्गी च चतुर्धा वा समप्रभा ॥ ९१ ॥
तैलमार्गाभिसृता च तन्त्रसिद्धिफलप्रदा ।
ताम्रपर्णा ताम्रकेशा ताम्रपात्रप्रिया तमा ॥ ९२ ॥
तमोगुणप्रिया तोला तत्त्वकारिनिवारिणी ।
तोषयुक्ता तमायाची तमषोढ़ेश्वरप्रिया ॥ ९३ ॥
तुलना तुल्यरुचिरा तुल्यवुद्धिस्त्रिधा मतिः ।
तत्त्वभक्ता तालसिद्धिस्त्रस्तस्थास्तवगा ि नी ॥ ९४ ॥
तलया तैलभा ताली तन्त्रगोपनतत्परा ।
तन्त्रमन्त्रप्रकाशा च त्रिशरेणुस्वरूपिणी ॥ ९५ ॥
त्रिंशदर्णप्रिया तुष्टा तुष्टिस्तुष्टजनप्रिया ।
थाकारकूटदण्डेशा थद ेशप्रियाथवा ॥ ९६ ॥
थकाराक्षररूढ़ाङ्गी थान्तवर्गार्थकारिका ।
थान्ता थमेश्वरी थाका थकारवीजमालिनी ॥ ९७ ॥
दक्षदामप्रिया दोषा दोषजालवनाश्रिता ।
दशा दशनघोरा च देवीदासप्रिया दया ॥ ९८ ॥
दैत्यहन्त्रीपरा दैत्या दैत्यानां मर्दिनी दिशा ।
दन्ता दान्तप्रिया दामा दामन्ता दीर्घकेशिका ॥ ९९ ॥
दशनारक्तवर्णा च दरीगृहनिवासिनी ।
देवमाता दुर्लभा च दीर्घाङ्गी दासकन्यका ॥१०० ॥
दशनश्री दीर्घनेत्रा दीर्घनासा च दोषहा ।
दमयन्ती दलस्था च द्व ष्यहन्त्री दशाश्रिता ॥ १०१ ॥

दैशेषिका दिशिगता दशनास्त्रविनाशिनी ।
दारिद्र्यहा दरिद्रस्था दरिद्रधनदायिनी ॥ १०२ ॥
दन्तुरा देशभाषा च देशस्था देशनायिका ।
द्वेषरूपा द्वेषहन्त्री द्वेषारिगणमोहिनी ॥ १०३ ॥
दामोदरस्थाननादा दलानां बलदायिनी ।
दिग्दर्शनस्थानदर्शदर्शनप्रियवादिनी ॥ १०४ ॥
दामोदरप्रिया दान्ता दामोदरकलेवरा ।
द्राविणी द्राविणी दक्षा दक्षकन्या दला दृढ़ा ॥१०५॥
दृढ़ासना दासशक्तिर्द्वन्द्वयुद्धप्रकाशिनी ।
दधिप्रिया दधिस्था च दधिमङ्गलकारिणी ॥ १०६ ॥
दर्पहा दर्पदाहप्रा दर्भपुष्पप्रिया दधिः ।
दर्भस्था द्रुपदसुता द्रौपदी द्रुपदप्रिया ॥ १०७ ॥
धर्मचिन्ता धनाध्यक्षा धनेश्वरवरप्रदा ।
धनहा धनदा धन्वी धनुर्हस्ता धनुःप्रिया ॥ १०८ ॥
धरणी धैर्य्यरूपा च धनस्था धनमोहिनी ।
धीरा धीरप्रिया धारा धाराधारणतत्परा ॥ १०९ ॥
धान्यदा धान्यबीजा च धर्माधर्मस्वरूपिणी ।
धाराधरस्था धन्या च धर्मपुञ्जनिवासिनी ॥ ११० ॥
धनाढ्यप्रियकन्या च धन्यलोकैश्च सेविता ।
धर्मार्थकाममोक्षाङ्गी धर्मार्थकाममोक्षदा ॥ १११ ॥
धराधरा धुरीणा च धवला धवलामुखी ।
धरा च धामरूपा च ध्रुवा ध्रौव्या ध्रुवप्रिया ॥ ११२ ॥
धनेशी धारणाख्या च धर्मनिन्दाविनाशिनी ।
धर्मतेजोमयी धर्म्या धैर्य्याश्रभर्गमोहिनी ॥ ११३ ॥
धारणा धौतवसना धुस्तूरफलभोगिनी ।
नारायणी नरेन्द्रस्था नारायणकलेवरा ॥ ११४ ॥

नरनारायणप्रीता धर्मनिन्दा न मोहिता ।
नित्या नापितकन्या च नयनस्था नरप्रिया ॥ ११५ ॥
नाम्नी नामप्रिया नारा नारायणसुता नरा ।
नवीननायकप्रीता नव्या नवफलप्रिया ॥ ११६ ॥
नवीनकुसुमप्रीता नवीनानां ध्वजा नुता ।
नारी निम्नस्थिता निन्दा नन्दिनी नन्दकारिका ॥ ११७ ॥
नवपुष्पमहाप्रीता नवपुष्पसुगन्धिका ।
नन्दनस्था नन्दकन्या नन्दमोक्षप्रदायिनी ॥ ११८ ॥
नमिता नमभेदा च नाम्नार्त्तवनमोहिनी ।
नवबुद्धिप्रियानेका नाकस्था नाककन्यका ॥ ११९ ॥
निन्दाहीनो नवोल्लासा नाकस्थानप्रदायिनी ।
निम्नचक्षु:स्थिता निम्ना नानचेच्छनिवासिनी ॥ १२० ॥
नाश्यातीता नीलवर्णा नीलवर्णा सरस्वती ।
नभःस्था नायकप्रीता नायकप्रियकामिनी ॥ १२१ ॥
नैववर्णा निराहारा निरीहाणां रजःप्रिया ।
निम्ननाभिप्रभाकारा नरेन्द्रहस्तपूजिता ॥ १२२ ॥
नलस्थिता नलप्रीता नलराजकुमारिका ।
परेश्वरी परानन्दा परापरविभेदिका ॥ १२३ ॥
परमा परचक्रस्था पार्वती पर्वतप्रिया ।
पारमेष्ठी पर्वनाना पुष्पमाल्यप्रिया परा ॥ १२४ ॥
परा प्रिया प्रीतिदात्री प्रीतिः प्रथमकामिनी ।
प्रथमा प्रथमा प्रीता पुष्पगन्धप्रिया परा ॥ १२५ ॥
पीष्टीपानरता पीना पीनस्तनसुशोभना ।
परमानरता पुंसां पाशहस्ता पशुप्रिया ॥ १२६ ॥
पललानन्दरसिका पलालधूमरूपिणी ।
पलाशपुष्पसङ्काशा पलाशपुष्पमालिनी ॥ १२७ ॥

प्रेमभूता पद्ममुखी पद्मरागसुमानिनी ।
पद्ममाला पापहरा पतिप्रेमविलासिनी ॥ १२८ ॥
पद्माननमनोहारी पद्मवक्त्रप्रकाशिनी ।
फलमूलाशना फाली फलदा फाल्गुनप्रिया ॥ १२९ ॥
फलनाथप्रिया फल्वी फल्वकन्या फलोन्मुखी ।
फेत्कारीतन्त्रमुख्या च फेत्कारगणपूजिता ॥ १३० ॥
फेरवी फेरवसुता फलभोगोद्भवा फला ।
फलप्रिया फलाशक्ता फाल्गुनानन्ददायिनी ॥ १३१ ॥
फालभोगोत्तरा फेला फुल्लाम्भोजनिवासिनी ।
वासुदेवरटहस्था च वासवी वीरपूजिता ॥ १३२ ॥
विषभच्चा बुधसुता बुंकारी बुंवरप्रदा ।
ब्राह्मी बृहस्पति वाचा वाचस्पतिवरप्रदा ॥ १३३ ॥
वेदाचारी वेद्यपरा वासवक्त्रस्थिता विभा ।
बोधज्ञा वौषड़ाख्या च वंशीवदनपूजिता ॥ १३४ ॥
वज्रकान्ता वक्रगतिर्वदरीवंशवर्द्धिनी ।
भारती भवरश्रीदा भवपत्नी भवात्मजा ॥ १३५ ॥
भवानी भाविनी भीमा भिषक्भार्य्यातुरिस्थिता ।
भूर्भुवःस्वःस्वरूपा च भूशार्त्ता भेकनादिनी ॥ १३६ ॥
भीतीभङ्गप्रिया भङ्गभङ्गहा भङ्गहारिणी ।
भर्त्ती भगवती भाग्या भगीरथनमस्कृता ॥ १३७ ॥
भगमाला भूतनाथेश्वरी भार्गवपूजिता ।
भृगुवंशा भीतिहरा भूमिर्भुजङ्गहारिणी ॥ १३८ ॥
भालचन्द्राभल्लबाला भवभूतिविभूतिदा ।
मकरस्था मत्तगतिर्मदमत्ता मदप्रिया ॥ १३९ ॥
मदिराष्टादशभुजा मदिरा मत्तगामिनी ।
मदिरासिद्धिदा मध्या मदान्तगतिसिद्धिदा ॥ १४० ॥

मीनभच्या मीनरूपा मुद्रामुद्राप्रिया गतिः ।
मुषला मुक्तिदा मूर्त्ता मूकीकरणतत्परा ॥ १४१ ॥
मूषार्त्ता मृगतृष्णा च मेषभक्षणतत्परा ।
मैथुनानन्दसिद्धिश्च मैथुनानलसिद्धिदा ॥ १४२ ॥
महालक्ष्मीर्भैरवी च महेन्द्रपीठनायिका ।
मनःस्था माधवी मुख्या महादेवमनोरमा ।
यशोदा याचना यास्या यमराजप्रिया यमा ॥ १४३ ॥
यशोराशिविभूषाङ्गी यतिप्रेमकलावती ।
रमणी रामपत्नी च रिपुघ्ना रीतिमध्यगा ॥ १४४ ॥
रुद्राणी रूपदा रूपा रूपसुन्दरधारिणी ।
रेतःस्था रेतसःप्रीता रेतःस्थाननिवासिनी ॥ १४५ ॥
रैन्द्रादेवसुता रैदा रिपुवर्गान्तकप्रिया ।
रोमावलीन्द्रजननी रोमकूपजगत्पतिः ॥ १४६ ॥
रौप्यवर्णा रौद्रवर्णा रौप्यालङ्कारभूषणा ।
रङ्गणा रङ्गरागस्था रणवह्निकुलेश्वरी ॥ १४७ ॥
लक्ष्मीः लाङ्गलहस्ता च लाङ्गलीकुलकामिनी ।
लिपिरूपा लीढ़पादा लतातन्तुस्वरूपिणी ॥ १४८ ॥
लिम्पती लेलिहा लोला लोमशप्रियसिद्धिदा ।
लौकिकी लौकिकीसिद्धिर्लङ्कानाथकुमारिका ॥ १४९ ॥
लक्षणा लक्ष्मीहीना च लप्रिया लार्णमध्यगा ।
विवसा वसनावेशा विवस्वकुलकन्यका ॥ १५० ॥
वातस्था वातरूपा च वेत्रमध्यनिवासिनी ।
श्मशानभूमिमध्यस्था श्मशानसाधनप्रिया ॥ १५१ ॥
शवस्था परसिद्धयर्थी शववक्षसि शोभिता ।
शरणागतपाल्या च शिवकन्या शिवप्रिया ॥ १५२ ॥
षट्चक्रभेदिनी षोढ़ान्यासजालदृढ़ानना ।

सन्ध्या सरस्वती सुन्द्या सूर्य्यगा सारदा सती ॥ १५३ ॥
हरिःप्रिया हराहाला लावण्यस्था चमा चुधा।
क्षेवज्ञा सिद्धिदात्री च अम्बिका अपराजिता ॥ १५४ ॥
आद्या इन्द्रप्रिया ईशा उमा ऊढ़ा ऋतुप्रिया।
सुतुण्डा स्वरवीजान्ता हरिवेशादिसिद्धिदा ॥ १५५ ॥
एकादशीव्रतस्था च ऐन्द्री ओषधिसिद्धिदा।
औपकारी अंशरूपा अस्त्रवीजप्रकाशिनी ॥ १५६ ॥
इत्येतत् कामुकीनाथ ! कुमारीणां सुमङ्गलम्।
त्रैलोक्यफलदं नित्यमष्टोत्तरसहस्रकम् ॥ १५७ ॥
महास्तोत्रं धर्मसारं धनधान्यसुतप्रदम्।
सर्वविद्याफलोल्लासं भक्तिमान् यः पठेत् सुधीः ॥ १५८ ॥
स सर्वदा दिवारात्रौ स भवेन्मुक्तिमार्गगः।
सर्वत्र जयमाप्नोति वीराणां वल्लभो भवेत् ॥ १५९ ॥
सर्वे देवा वशं यान्ति वशीभूताश्च मानवाः।
ब्रह्माण्डे ये च संशन्ति ते तुष्टा नात्र संशयः ॥ १६० ॥
ये वशन्ति च भूलोके देवतुल्यपराक्रमाः।
ते सर्वे भृत्यतुल्याश्च सत्यं सत्यं कुलेश्वर ! ॥ १६१ ॥
अकस्मात् सिद्धिमाप्नोति होमेन यजनेन च।
जाप्येन कवचाद्येन महास्तोत्रार्थपाठतः ॥ १६२ ॥
विना यज्ञैर्विना दानैर्विना जप्यैर्लभेत् फलम्।
यः पठेत् स्तोत्रकं नाम चाष्टोत्तरसहस्रकम् ॥ १६३ ॥
तस्य शान्तिर्भवेत् चिप्रं कन्यास्तोत्रं पठेत्ततः।
वारत्रयप्रपाठेन राजानं वशमानयेत् ॥ १६४ ॥
वारैकं पठितो मन्त्री धर्मार्थकाममोक्षभाक्।
त्रिदिनं प्रपठेद्विद्वान् यदि पुत्रं समिच्छति ॥ १६५ ॥
वारत्रयक्रमेणैव वारैक क्रमतोऽपि वा।

पठित्वा धनरत्नानामधिपः सर्ववित्तगः ॥ १६६ ॥
त्रिजगन्मोहयेन्मन्त्री वत्सरार्द्धप्रपाठतः ।
वत्सरं व्याप्य यदि वा भक्तिभावेन यः पठेत् ॥ १६७ ॥
चिरजीवी खेचरत्वं प्राप्य योगी भवेन्नरः ।
महाहवस्थितं वर्णं पश्यति स्थिरमानसः ॥ १६८ ॥
महिलामण्डले स्थित्वा शक्तियुक्तः पठेत् सुधीः ।
स भवेत् साधकश्रेष्ठः चौरी कल्पद्रुमो भवेत् ॥ १६९ ॥
सर्वदा यः पठेन्नाथ ! भावोन्नतकलेवरः ।
दर्शनात् स्तम्भनं कर्त्तुं क्षमो भवति साधकः ॥ १७० ॥
जलादिस्तम्भने शक्तो वह्निस्तम्भादिसिद्धिभाक् ।
वायुवेगी महावाग्मी वेदज्ञो भवति ध्रुवम् ॥ १७१ ॥
कविनाथो महाविद्यो बन्धकः पण्डितो भवेत् ।
सर्वदेशाधिपो भूत्वा देवपुत्रः स्वयं भवेत् ॥ १७२ ॥
कान्तिं श्रियं यशो वृद्धिं प्राप्नोति बलवान् यतिः ।
अष्टसिद्धियुतो नाथ ! यः पठेदर्थसिद्धये ॥ १७३ ॥
उर्जटेऽरण्यमध्ये च पर्वते घोरकानने ।
वने वा प्रेतभूमौ च शवोपरि महारणे ॥ १७४ ॥
ग्रामभङ्गे गृहे वापि शून्यागारे नदीतटे ।
गङ्गागर्भे महापीठे योनिपीठे गुरोर्गृहे ॥ १७५ ॥
धामक्षेत्रे देवगृहे कन्यागारे कुलालये ।
प्रान्तरे गोष्ठमध्ये वा राजादिभयहीनके ॥ १७६ ॥
निर्भयादिस्वदेशेषु शिवलिङ्गालयेऽथवा ।
भूगर्त्ते चैकलिङ्गे वा शाम्यदेशे शिवाकुले ॥ १७७ ॥
अश्वत्थमूले विल्वे वा कुलवृक्षसमीपगे ।
अन्येषु सिद्धदेशेषु कुलरूपस्य साधकः ॥ १७८ ॥
दिव्यो वा वीरभावस्थो यष्ट्वा कन्याः कुलाकुली ।

कुलद्रव्यैश्च विविधैः सिद्धिद्रव्यैश्च साधकः॥ १७९॥
मांसासवेन जुहुयान्मदात्तकरसेन च।
हुतशेषं कुलद्रव्यं ताभ्यो दद्यात् सुसिद्धये॥ १८०॥
तासामुच्छिष्टमानीय जुहुयाद्वक्त्रपङ्कजे।
घृणालज्जाविनिर्मुक्तः साधकः स्थिरमानसः॥ १८१॥
पिबेन्मांसरसं मन्त्री सदानन्दो महाबली।
महामांसाष्टकं ताभ्यो मदिराकुम्भपूरितम्॥ १८२॥
तारो माया रमा वह्निजायामन्त्रं पठन् सुधीः।
नैवेद्यविधिदानेन पठित्वा स्तोत्रमङ्गलम्॥ १८३॥
स्वयं प्रसादं भुक्त्वा हि सर्वविद्याधिपो भवेत्।
शूकरस्योष्ठमांसेन पीनमीनेन मुद्रया॥ १८४॥
महासवघटेनापि दत्त्वा पठति यो नरः।
ध्रुवं स सर्वगामी स्यात् विना होमेन पूजया॥ १८५॥
रुद्ररूपी भवेन्नित्यं महाकालात्मको भवेत्।
सर्वपुण्यफलं नाथ! कुलात् प्राप्नोति साधकः॥ १८६॥
क्षीराब्धिरत्नकोषेशो विपन्नामी च योगिराट्।
भक्त्या नाथ! दयासिन्धुर्निष्कामत्वं लभेद्ध्रुवम्॥१८७॥
महाशत्रुपातने च महाशत्रुभयार्दिते।
वारैकपाठमात्रेण शत्रूणां वधमानयेत्॥ १८८॥
शत्रून् संवर्द्धयेत् क्षिप्रमन्धकारं यथा रविः।
उच्चाटने मारणे च भवेद्घोरतरे निपे॥ १८९॥
पठनाद्धारणान्मर्त्यो देवो वा राक्षसादयः।
प्राप्नुवन्ति झटित् शान्तिं कुमारीनामपाठतः॥ १९०॥
पुरुषो दक्षिणे वाहौ नारी वामकरे तथा।
धृत्वा पुत्रादिसम्पत्तिं लभते नात्र संशयः॥ १९१॥
माज्ञया मोक्षमुपैति साधको गजान्तकं नाथ! सहस्रनाम।

पठेन्मनुष्यो यदि भक्तिभावत स्तदादि सर्वत्र फलोदयं लभेत् १८
मोक्षं सत्फलभोगिनां स्तववरं सारं परानन्ददं
ये नित्यं हि मुदा पठन्ति विफलं सार्थञ्च चिन्ताकुलाः।
ते नित्याः प्रभवन्ति कीर्त्तिकमले श्रीरामतुल्यो जयी
कन्दर्पायुततुल्यरूपगुणवान् क्रोधेश ! रुद्रोपमः ॥ १९३॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने कुमार्य्युपचर्य्याविन्यासे
सिद्धमन्त्रप्रकरणे दिव्यभावनिर्णये अष्टोत्तरसहस्रनाम-
मङ्गलोल्लासे दशमः पटलः ॥ १० ॥

---

## अथ एकादशः पटलः ।

अथात संप्रवक्ष्यामि दिव्यभावादिनिर्णयम् ।
यमाश्रित्य महारुद्रो भुवनेश्वरनामधृक् ॥ १ ॥
यज्ज्ञात्वा कमलानाथो देवतानामधीश्वरः ।
चतुर्वेदाधिपो ब्रह्मा साक्षाद् ब्रह्म सनातनः ॥ २ ॥
वटुको मम पुत्रश्च शत्रुः स्वर्गाधिदेवता ।
अष्टसिद्धियुताः सर्वे दिक्पालाः खेचरादयः ॥ ३ ॥
तत्प्रकारं महादेव ! आनन्दनाथभैरव ! ।
सुरानन्द! हृदानन्द ! ज्ञानानन्द! दयामय ! ॥ ४ ॥
शृणु त्वं कमलानाथ ! यदि त्वं सिद्धिमिच्छसि ।
मम प्रियानन्दरूप ! यतो मेऽन्यतनुस्थितः ॥ ५ ॥
आनन्दभैरव-उवाच । त्रिविधं दिव्यभावञ्च वेदागमविवेकजम्
वेदार्थमथ संप्रोक्तं मध्यमं चागमोद्भवम् ॥ ६ ॥
उत्तमं सकलं प्रोक्तं विवेकोल्लाससम्भवम् ।
तथैव त्रिविधं भावं दिव्यवीरपशुक्रमम् ॥ ७ ॥
दिव्यं विवेकजं प्रोक्तं सर्वसिद्धिप्रदायकम् ।
उत्तमं तद्विजानीयादानन्दरससागरम् ॥ ८ ॥

मध्यमं चागमोल्लासं वीरभावं क्रियान्वितम् ।
वेदोद्भवं फलार्थञ्च पशुभावं हि चाधमम् ॥ ९ ॥
सर्वनिन्दासमव्याप्तं भावानामधमं पशोः ।
उत्तमे उत्तमं ज्ञानं भावसिद्धिप्रदं नृणाम् ॥ १० ॥
मध्यमे मधुमत्याश्च यत्कुलागमसम्भवम् ।
अकालमृत्युहरणं भावानामतिदुर्लभम् ॥ ११ ॥
वीरभावं विना नाथ ! न सिध्यति कदाचन ।
अधमे अधमा व्याख्या निन्दार्थवाचकं सदा ॥ १२ ॥
यदि निन्दां न करोति तदा तत्फलमाप्नुयात् ।
पशुभावेऽपि सिद्धिः स्याद् यदि देवं सदाभ्यसेत् ॥ १३ ॥
वेदार्थचिन्तनं नित्यं वेदपाठध्वनिप्रियम् ।
सर्वनिन्दाविरहितं हिंसालस्यविवर्जितम् ।
लोभमोहकामक्रोध मदमात्सर्य्य वर्जितम् ॥ १४ ॥
यदि भावस्थितो मन्त्री पशुभावेऽपि सिद्धिभाक् ।
पशुभावं महाभावं ये जानन्ति महीतले ॥ १५ ॥
किमसाध्यं महादेव ! श्रमाभ्यासेन चास्ति तत् ।
श्रमाधीनं जगत्सर्वं श्रमाधीनाश्च देवताः ॥ १६ ॥
श्रमाधीनं महामन्त्रं श्रमाधीनं परन्तपः ।
श्रमाधीनं कुलाचारं पशुभावेऽपि लक्षणम् ॥ १७ ॥
वेदार्थज्ञानमात्रेण पशुभावं कुलप्रियम् ।
स्मृत्यागमपुराणानि वेदार्थविविधानि च ॥ १८ ॥
अभ्यस्य सर्वशास्त्राणि तत्त्वज्ञानात्तु बुद्धिमान् ।
पललानि बधान्यार्थी सर्वशास्त्राणि संत्यजेत् ॥ १९ ॥
ज्ञानी भूत्वा भावसारमाश्रयेत् साधकोत्तमः ।
वेदे वेदक्रिया कार्य्या मदुक्तवचनान्वितः ॥ २० ॥
पशूनां श्रमदाहीनामिति लक्षणमीरितम् ।

आगमार्थक्रियाकार्य्यां मत्कुलागमचेष्टया ॥ २१ ॥
वीराणामुद्धतानाञ्च मत् शरीरानुगामिनाम् ।
मद्येच्छाकुलतत्त्वानामिति लक्षणमीरितम् ।
विवेकसूत्रसंज्ञा कार्य्यासुदृढ़चेतसा ॥ २२ ॥
सर्वत्र समभावानां भावमात्रं हि साधनम् ।
सर्वत्र मत्पदाम्भोजसम्भवं सचराचरम् ॥ २३ ॥
दृष्ट्वा यत् कुरुते कर्म चाखण्डफलसिद्धिदम् ।
अखण्डज्ञानचित्तानामिति भावं विवेकिनाम् ॥ २४ ॥
निर्मलानन्ददिव्यानामिति लक्षणमीरितम् ।
दिव्ये तु त्रिविधं भावं यो जानाति महीतले ॥ २५ ॥
न नश्यति महावीरः कदाचित् साधकोत्तमः ।
क्रमेण दिव्यभावादिमाश्रित्य साधयेद् यदि ॥ २६ ॥
दिव्यभावे महासिद्धिं प्राप्नोति साधकोत्तमः ।
दिव्यभावं विना नाथ ! मत्पदाम्भोजदर्शनम् ॥ २७ ॥
य इच्छति महादेव ! स मूढ़ः साधकः कथम् ? ।
पशुभावं प्रथमके द्वितीये वीरभावकम् ॥ २८ ॥
तृतीये दिव्यभावञ्च दिव्यभावत्रयं क्रमात् ।
तत्प्रकारं शृणु शिव ! त्रैलोक्यपरिपालन ! ॥ २९ ॥
भावत्रयविशेषज्ञः षड़ाधारस्य भेदनः ।
पञ्चतत्त्वार्थभावज्ञो दिव्याचाररतः सदा ॥ ३० ॥
स एव भवति श्रीमान् सिद्धानामादिपारगः ।
शिववद् विहरेत् सोऽपि अष्टैश्वर्य्यसमन्वितः ॥ ३१ ॥
सर्वत्र शुचिभावेन आनन्दजनसाधनम् ।
प्रातःकालादिमध्याह्नकालपर्य्यन्तधारणम् ॥ ३२ ।
भोजनञ्चोक्तद्रव्येण संयमादिक्रमेण वा ।
यः साधयति स सिद्धो दिव्यभावे पशुक्रमात् ॥ ३३ ॥

दिव्यभावे वीरभावं वदामि तत् पुनः शृणु ।
मध्याह्नादिकसन्ध्यान्तं शुचिभावेन साधनम् ॥ ३४ ॥
जपेन धारणं वापि चित्तमादाय यत्नतः ।
एकान्त निर्जने देशे सिद्धो भवति निश्चितम् ॥ ३५ ॥
तत्कालं वीरभावार्थं भावमात्रं हि साधनम् ।
भावेन लभते सिद्धिं भावादन्यन्न कुत्रचित् ॥ ३६ ॥
रात्रौ गन्धादिसम्पूर्णताम्बूलपूरिताननः ।
विजयानन्दसम्पन्नो जीवात्मपरमात्मनोः ॥ ३७ ॥
ऐक्यं चित्ते समाधाय आनन्दोद्रेकसंभ्रमः ।
यो जपेत् सकलां रात्रिं गतभिर्निर्जने गृहे ॥ ३८ ॥
स भवेत् कालिकादासो दिव्यानामुत्तमोत्तमः ।
एवं भावत्रयं ज्ञात्वा यः कर्म साधयेत्ततः ॥ ३९ ॥
अष्टैश्वर्य्ययुतो भूत्वा सर्वज्ञो भवति ध्रुवम् ।
भावत्रयाणां मध्ये तु भावपुष्टार्थनिर्णयम् ॥ ४० ॥
शृणु नाथ ! प्रवक्ष्यामि सावधानावधारय ।
अकस्मात् सिद्धिमाप्नोति ज्ञात्वा सङ्केतलाञ्छितम् ॥ ४१ ॥
यो जानाति महादेव ! तस्य सिद्धिर्न संशयः ।
द्वादशे पटले सूक्ष्मसङ्केतार्थं वदामि तत् ॥ ४२ ॥

आनन्दभैरव-उवाच । एकादशे च पटले शुद्धप्रश्नार्थनिर्णयम् ।
भावेन लभ्यते सर्वं भावाधीनमिदं जगत् ॥ ४३ ॥
भावं विना महाकाल ! न सिद्धिर्जायते क्वचित् ।
पशुभावाश्रयाणाञ्च अरुणोदयकालतः ॥ ४४ ॥
दशदण्डाश्रितं कालं प्रश्नार्थं कोमलं प्रभो ! ।
चक्रं द्वादशराशेश्च मासद्वादशकस्य च ॥ ४५ ॥
दशदण्डे विजानीयात् भावाभावं विचक्षणः ।
अनुलोमविलोमेन पञ्चस्वरविभेदतः ॥ ४६ ॥

बाल्यकैशोरसौन्दर्य्यं यौवनं वृद्धसंज्ञकम् ।
अष्टमितं क्रमाज्ज्ञेयो विधिः पञ्चस्वरः स्वयम् ॥ ४७ ॥
स्वकीयं नासिकाग्रस्तं पञ्चमं परिकीर्त्तितम् ।
यन्नासापुटमध्ये तु वायुर्भवति भैरव ! ॥ ४८ ॥
तन्नासापुटमध्ये तु भावाभावं विचारयेत् ।
आकाशं वायुरूपं हि तैजसं वारुणं प्रभो ! ॥ ४९ ॥
पार्थिवं क्रमशो ज्ञेयं बाल्यास्तादिक्रमेण तु ।
वामोदये शुभा वामा दक्षिणे पुरुषः शुभः ॥ ५० ॥
वायूनां गमनं ज्ञेयं गगनावधिरेव च ।
केवलं मध्यदेशे तु गमनं पवनस्य च ।
तदाकाशं विजानीयात् बाल्यभावं प्रकीर्त्तितम् ॥ ५१ ॥
तिर्य्यग्गतिस्तु नासाग्रे वायोरुदयमेव च ।
केवलं भ्रमणं ज्ञेयं सर्वमङ्गलमेव च ॥ ५२ ॥
किशोरं तद्विजानीयात् वायौ तिर्य्यग् गतौ विभो ! ।
केवलोर्द्धनासिकाग्रे वायुर्गच्छति दण्डवत् ॥ ५३ ॥
तत्तैजसं विजानीयात्तेजसा बलवान् भवेत् ।
यौवनं तद्विजानीयात् कर्मसिद्धिर्भवेद् ध्रुवम् ॥ ५४ ॥
यदा व्याप्य गच्छतां हि नासापुटसमाकुलम् ।
जलोदयं विजानीयात्तदा व्यामोहमेव च ॥ ५५ ॥
तद्दे वृद्धगतभावञ्च विलम्बोऽधिकचेष्टया ।
प्राप्नोति परमां प्रीतिं वारुणोदयनीरुजम् ॥ ५६ ॥
यदाधो गच्छति क्षिप्रं किञ्चिद् वृद्धमगोचरम् ।
यदा करोति प्रश्वासं तदा रोगोल्वणोदयः ॥ ५७ ॥
पृथिव्या उन्नतं भाग्यं रोगातपप्रपीड़ितम् ।
अस्तमितं महादेव ! अनुलोमविलोमतः ॥ ५८ ॥
पवनो गच्छति क्षिप्रं वामदक्षिणभेदतः ।

वामनासापुटे याति पृथिवीजलमेव च ॥ ५९ ॥
सदा फलाफलं धत्ते मुदिता कुलमण्डले।
तयोर्वै वायवी शक्तिः फलभोगं तदा लभेत् ॥ ६० ॥
यद्येवं वामभागे तु वामायाः प्रश्नकर्मणि।
यदि तत्र पुमान् प्रश्नं करोति वामगामिनि ॥ ६१ ॥
तदा रोगमवाप्नोति कर्महीनो भवेद् ध्रुवम्।
यदि वायूदयो वामे दक्षिणे पुरुषः स्थितः ॥ ६२ ॥
तदा फलमवाप्नोति द्रव्यागमनदुर्लभः।
अकस्मात् द्रव्यहानिः स्यान्मनोगतफलापहृत् ॥ ६३ ॥
सुहृद्भङ्गविवादश्च भिन्नभिन्नोदयं शुभम्।
केवलं वरुणस्यैव पुरुषो दक्षिणे शुभम् ॥ ६४ ॥
अशुभं पृथिवी दक्षे भेदोऽयं वरदुर्लभः।
सदोदयं दक्षिणे च वामे तैजस एव च ॥ ६५ ॥
आकाशस्य विजानीयात् शुभाशुभफलं प्रभो!।
यदि भाग्यवशादेव वायोर्मन्दा गतिर्भवेत् ॥ ६६ ॥
दक्षनासामध्यदेशे तदा वामोदयं शुभम्।
तदा वामे विचारश्च वायुतेजो द्वयस्य च ॥ ६७ ॥
ज्ञात्वोदयं विजानीयात् मिश्रे हानिः स्वरे भयम्।
एवं स्व नामा वामे तु यदि गच्छति वायवी ॥ ६८ ॥
तस्मिन् काले पुमान् दक्षो दक्षभागस्थसंमुखः।
तदा कन्यादानफलं यथा प्राप्नोति मानवः ॥ ६९ ॥
तदा वायुप्रसादेन प्राप्नोति धनमुत्तमम्।
देशान्तरस्थभारार्त्ता आयान्ति पुत्रसम्पदः ॥ ७० ॥
बाल्यादिकं भावमेवं राशिभेदे शुभं दिशेत्।
तत्तच्चक्रे फलं तस्य राशिद्वादशचक्रके ॥ ७१ ॥
सूक्ष्मं फलं विजानीयात् चक्रं नाम शृणु प्रभो!।

आज्ञाचक्रं कामचक्रं फलचक्रञ्च सारदम् ॥ ७२ ॥
प्रश्नचक्रं भूमिचक्रं स्वर्गचक्रं ततः परम् ।
तुलाचक्रं राशिचक्रं षट्चक्रं त्रिगुणात्मकम् ॥ ७३ ॥
सारचक्रमुल्काचक्रं मृत्युचक्रं क्रमात् प्रभो ! ।
षट्कोणं चात्र जानीयादनुलोमविलोमतः ॥ ७४ ॥
सर्वचक्रे स्वरज्ञानं सर्वत्र वायुसङ्गतिः ।
सर्वप्रश्नादिसञ्चारं भावेन जायते यदि ॥ ७५ ॥
तदा तद्दण्डमानञ्च ज्ञात्वा राश्युदयं बुधः ।
कुर्य्यात् प्रश्नविचारञ्च यदि कीर्त्तिमिहेच्छति ॥ ७६ ॥

इति रुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थबोधनिर्णये पञ्च भावविचारे सारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरवसंवादे एकादशः पटलः ॥ ११ ॥

---

## अथ द्वादशः पटलः ।

तन्नामसन्धिदेशस्थमष्टमाङ्कमधो लिखेत् ।
तदधः सन्धिदेशस्थं सप्ताङ्कं विलिखेत् बुधः ॥ १ ॥
तदूर्द्ध्वं वामकोणे च तृतीयाङ्कं लिखेत्ततः ।
तदूर्द्ध्वं कोणगेहे च योग्याङ्कं विलिखेत्तथा ॥ २ ॥
तद्दक्षिणे गृहे चैकमङ्कवर्णं शृणु प्रभो ! ।
वायुभावमन्यभावं षष्ठभावञ्च गुह्यकम् ॥ ३ ॥
एतन्मध्ये नास्ति वर्णं कोणाद्यञ्च सवर्णकम् ।
टतवर्गौ मूर्द्धनि लिखेत् शरं शून्याध एव च ॥ ४ ॥
वेदाङ्कस्थौ कचवर्गौ एऐकारसमन्वितौ ।
तृतीयाङ्कस्थितं वर्णं आदिचान्तं टवर्गमौम् ।
उपवर्गौ युगान्तस्थौ अकारं सावधानतः ॥ ५ ॥
विलिखेद्दक्षिणे तस्य गेहे चैकाङ्कमध्यके ।

उयुगं पतवर्गौ च अकारं युग्मशीर्षके ॥ ६ ॥
एतत् प्रोक्तं कामचक्रं प्रश्नकालफलप्रदम्।
वामावर्त्तेन गणयेत् दशकोणस्थवर्णकान् ॥ ७ ॥
अनुलोमविलोमेन पञ्चस्वरादि नामतः
यस्मिन् गृहे स्वीयनाम प्राप्नोति वेदपारगः ॥ ८ ॥
तद् गृहावधिप्रश्नार्थं गणयेद्भावसिद्धये।
नवग्रह नवस्थानं वर्णं ज्ञात्वा सुबुद्धिमान् ॥ ९ ॥
बाल्याभावादिकं ज्ञात्वा यत्र ग्रहास्तनुर्भवेत्।
तत्रचक्रं समानीय वाराधिकारमानयेत् ॥ १० ॥
विना त्रिकोणयोगेन न षट्कोणं लिखेद् बुधः।
तन्मध्ये अष्टकोणञ्च भित्वा देवगृहान्तरम् ॥ ११ ॥
तन्मध्ये चापि षट्कोणं तन्मध्ये च त्रिकोणकम्।
क्रमेण विलिखेद्वर्णं दक्षिणावर्त्तयोगतः ॥ १२ ॥
ऊर्द्ध्वं वामदेशभागे अ आ इ च कवर्गकम्।
तद्दक्षिणे ई उयुगं चवर्गञ्च लिखेद् बुधः ॥ १३ ॥
दक्षपार्श्वे अधोभागे ऋयुगं टतवर्गकम्।
तदधो ऌ ॡ ए ऐ रूपं पवर्गञ्च लिखेद् बुधः ॥ १४ ॥
तद्वामपार्श्वभागे च ओ औ य रलवान् लिखेत्।
शेषगेहे लिखेदं अः शादिक्षान्तं हि तद् गृहे ॥ १५ ॥
मध्यस्तमादिकोणे च एकाङ्कं सर्व्वर्क्षौ तनुम्।
रुद्राग्निमूर्त्तिमतलं अग्निकोणे लिखेद् बुधः ॥ १६ ॥
यजमानः पशुपतिर्मूर्त्तिषष्ठञ्च दक्षिणे।
महादेवं सोममूर्त्तिं नैर्ऋते विलिखेत् सुधीः ॥ १७ ॥
जलमूर्त्तिभवं युग्मं पश्चिमे विलिखेद् बुधः।
उग्रं वीरं वायुमूर्त्तिं वामकोणे चतुर्थकम् ॥ १८ ॥
भीमरूपाकाशमूर्त्तिं पञ्चमं चोत्तरे लिखेत्।

ईशानं सूर्य्यमूर्त्तिञ्च ईशाने अष्टमं लिखेत् ॥ १९ ॥
अधः षट्कोणमध्ये च चाष्टकोणं लिखेत्ततः ।
ऊर्द्धकोणे ग्रीष्मकालं शिशिरञ्चापि दक्षिणे ॥ २० ॥
वर्षाकालमधस्तस्य ससर्वमन्तकं लिखेत् ।
शरत्कालं पञ्चकोणे शीतकालञ्च षष्ठके ॥ २१ ॥
त्रिकोणाधिपतिं मध्ये वह्निरूपं वकारकम् ।
लिखित्वा गणयेन्मन्त्री वर्णवेदाङ्गवह्निभिः ॥ २२ ॥
एतच्चक्रं महासिद्ध्या फलचक्रं विशारदम् ।
अधुना कुलनाथेश ! राशिचक्रं पुनः शृणु ॥ २३ ॥
विना ज्ञानेन यस्यैवं प्रश्नभारो न जायते ।
यदि प्रश्नचक्रभावं जानाति साधकोत्तमः ।
तदा निजफलं ज्ञात्वा सिद्धिमाप्नोति निश्चितम् ॥ २४ ॥

आनन्दभैरव उवाच ।

षट्कोणं कारयेन्मन्त्री विना त्रिकोणसाधनैः ।
तन्मध्ये च चतुष्कोणं तन्मध्ये शादिवर्णकान् ॥ २५ ॥
लिखित्वा विलिखेत्तत्र तदङ्गमध्यदेशतः ।
षड़ङ्गं दापयेन्मन्त्री दीर्घदीर्घक्रमेण तु ॥ २६ ॥
तदग्रे षड़्गृहं कुर्य्यात्तत्राङ्कार्णान् लिखेत् सुधीः ।
ऊर्द्ध्वप्रथमगेहे च कवर्गं विलिखेद् बुधः ॥ २७ ॥
तद्दक्षिणे मन्दिरे च चवर्गं विलिखेद् बुधः ।
टवर्गं दक्षिणे चाधः सर्वाधस्तु तवर्गकम् ॥ २८ ॥
तद्वाममन्दिरे नाथ ! पवर्गं वर्णमङ्गलम् ।
तदूर्द्ध्वे यादिवान्तञ्च दक्षिणावर्त्तयोगतः ॥ २९ ॥
अकारादिस्वरान् तत्र मन्दिरे विलिखेद् बुधः ।
यावत् स्वरस्थितिर्याति तावत्कालं विचारयेत् ॥ ३० ॥
मेषादिराशिसद्भावं वर्गलेखनमानतः ।

अनुलोमविलोमेन विलिखेत् षष्ठमन्दिरे ॥ ३१ ॥
यद् यद् गेहे साध्यनाम चास्ति नाथ ! स्वरादिकम् ।
एकीकृत्य हरेदङ्कं वाञ्छितं प्राप्यते वरम् ॥ ३२ ॥
षडङ्केन ततो नाथ ! हरेदनलसंख्यया ।
यदङ्कं प्राप्यते तत्र सराशिस्तत्क्षणस्य च ॥ ३३ ॥
आज्ञाचक्रफलं सिद्धिविद्यानाथ ! वदामि तत् ।
येन विज्ञानमात्रेण सर्वज्ञो भवति ध्रुवम् ॥ ३४ ॥
अकस्मात् शक्तिमाप्नोति विद्यारत्नं वदामि तत् ।
रव्यादिसप्तवारञ्च कृते भद्रविवर्द्धनम् ॥ ३५ ॥
शन्यादिसप्तवारञ्च त्रेतायां सौख्यवर्द्धनम् ।
गुर्वादिसप्तवारञ्च द्वापरे धर्म्मसाधनम् ॥ ३६ ॥
शुक्रादिवारसप्तञ्च कलौ योगफलप्रदम् ।
अतः शुक्रादिपर्य्यन्तं गणनीयं विचक्षणैः ॥ ३७ ॥
गणयेत् सप्तवारञ्च मध्यचतुर्दले सुधीः ।
पूर्वादिक्रमतो वारान् गणयेन्नद्रवित्तमः ॥ ३८ ॥
निजवारो यत्र पत्रे समाप्तिस्तद्भवञ्च तत् ।
तद्भवाधिं समानीय वर्णभेदं समानयेत् ॥ ३९ ॥
सामान्यफलमूलञ्च वदामि पत्रभेदतः ।
आज्ञाचक्रं शुभं मन्त्री आज्ञाचक्रं विचारयेत् ।
तत् फलाफलमाहात्म्यं शृणु सङ्केतपण्डित ! ॥ ४० ॥

आनन्दभैरव उवाच ।

दले पूर्वभागे अकाराद्य इन्दुस्फुटे वाद्यलाभं हकारान्तशब्दं
समानार्थभावं विशिष्टार्थयोगं क्रतुक्षेमयुक्तं तथा पुत्रलाभः ।
दयायुक्तभूपः समाप्नोति मर्त्त्ये विवाहं सुवासं सुखं नाथ ! लोका-
नुरागं
विभाव्यं वकानां समाप्तौ समस्तं धनादिं सुकीर्त्तिं यशश्च त्रिवर्गम् ४१

माहेन्द्रासुतयोगराजगहनं साचादयमारोपणं
चिन्तानां परिचञ्चलं खलगुणाह्लादेन सामोदितम् ।
पुत्रार्थलाभं यदि चाध एव प्रगच्छति क्रूरबहुप्रतापः ।
तथापि हन्तुं न च वर्णमध्ये चमं स्वसिद्धिं भजते चमादिः ॥४२
रसार्थप्रश्नं कुरुते यदि स्यान्नरो हि चाधो गृहमध्यभागी ।
स्वकीय इन्दु प्रियवन्नवेद् ध्रुवं मनोगतं सौख्यविवर्द्धनञ्च ॥४३॥

शत्रूणां हननं तदा कुलगतं सञ्चारवातं सदा
रोगाणां परिवर्द्धनं प्रभुपदे भक्तं मनो ज्ञापनम् ।
आह्लादं हृदयाम्बुजे सुतधनं तीर्थागमं शोकहं
शुष्कार्थं गणयेत्ततः प्रचपला वाग्देवता दर्शनम् ॥ ४४ ॥

आथर्वे पत्रमध्ये निवसति कमला कोमला वा सुदात्री
आगन्तव्यादिवार्त्तां कथयति सहसा सर्वदा मङ्गलानि ।
नित्यावश्यं प्रतापं प्रियगणहितं प्रेमभावाश्रयत्वं
नित्यं कान्तामुखाम्भोरुह-विमलमधुप्रेमपानाभिलाषम् ॥४५॥
मेषे दृष्टिमुपैति सिद्धनिवहैः कुम्भे च तेषां फलम् ।
लाभं कुञ्जरघातकेषु रजतं चौर्य्येण यद् योगतः
एवं कांस्यविहारणं शतपले सूर्य्योदयात्तिष्ठति ॥ ४६ ॥

प्रातःकालफलाफलं कथयति श्रीकेश्वरी मेषगः
पश्येदेकशतं फलन्तु धनुषा व्याप्तं यदा भूतले ।
वित्तानां हरणं तदा जलगते मित्रस्य राज्यादिकम्
दूरस्थादिकमागतादिनमयं शत्रोर्महापीड़नम् ॥ ४७ ॥
वाञ्छावर्गकुलोदयं समुदयात् सूर्य्यस्य चागण्यते
शेषे चौरकशात्रपालमुदितः कुम्भो महादुर्बली ।
दारिद्र्यस्य कथा कदा सुविषयं विद्यार्थभूषञ्च यो
लाभं देशविदेशकार्य्यगमनं शीघ्रं धनाद्यागमम् ॥ ४८ ॥
देवानां खलु दर्शनार्थकथनं व्यामोहसंनाशनम् ।

वारि शुक्रे शनिगतदिवसे क्रूरराशौ च सूर्य्ये
नित्यं ज्ञानोदयं यन्निजपथसुयुषां निर्णयं तत् प्रकाशं ।
अष्टौ वर्गानुदयति सुदा प्याधिरोमामहत्त्वं
लोकोल्लासं प्रथमखचरे चायुषि प्रश्नमात्रे ॥ ४९ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावप्रश्नार्थबोधनिर्णये पाशवकल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरव-संवादे द्वादशः पटलः ॥ १२ ॥

---

## अथ त्रयोदशः पटलः ।

### आनन्दभैरव उवाच ।

आज्ञाप्रश्नार्थभावञ्च वर्णविन्यासनिर्णयम् ।
अधुनाशु सुसर्वज्ञ ! भावज्ञानपरायण ! ॥ १ ॥
यदि मेषे स्वनक्षत्रं स्वराशिसंयुतं शुभम् ।
ज्ञात्वा शुभादिपत्रञ्च पलमानेन साधकः ॥ २ ॥
गणयेदाशु सारञ्च येन तत् प्रश्ननिर्णयः ।
पूर्वे दले ककारस्य वर्णभेदं शृणु प्रभो ! ॥ ३ ॥

मनसि सुखसमूहं प्राणसौख्यार्थचिन्ता-
वसनगणनलाभं प्रीतिपुत्रार्थयोग्यम् ।
स्थिरपदमपि देशे दर्शनं प्राणबन्धोः
सकलकलुषहानिश्चादिपत्रे ककारे ॥ ४ ॥

सदा नृनासिके सुखं सुखोल्वणस्य सेवनम् ।
सदाशिवे च भक्तिदं स्वकीयगेहमङ्गलम् ॥ ५ ॥
कलाधरस्य दृष्टिभिः प्रधानलोकपूजनम् ।
हिताहितं न बाधते विवाहके विनाशनम् ॥ ६ ॥
ऋकारे विपदां ध्वंसं धैर्य्यं विद्याधरीधनम् ।
व्याधिपीड़ा स्वजनानां पीड़ाप्रश्नं वदेत्तदा ॥ ७ ॥

उकारे वायुभावस्य वृथागमनमेव च।
दारिद्र्यहीना ये यान्ति दूरागमनदुर्लभम् ॥ ८ ॥
ऊकारे द्रव्यप्रश्नञ्च शुभकार्य्ये गते भयम्।
आशु धनं समाप्नोति प्राप्य निर्धनतां व्रजेत् ॥ ९ ॥
पञ्चत्वजिज्ञासनमेव सत्यं नित्यं सुखानामुदयाय चेष्टा।
शत्रोर्विनाशाय हिताय बन्धोः ऋकारकूटे परचौरचेष्टा ॥ १० ॥
मारीभीतिविरोधनं धनपुत्रबन्धुपुञ्जोदयम्।
मरणं गमने चौरो नैनं लिख्यं शठे वके ॥ ११ ॥
हरिपूजा हरिध्यानं हरिपादाम्बुजे मतिः।
चौर्य्याहरणद्रव्यस्य न हानिर्जन्महार्दके ॥ १२ ॥
ऌकारे वेतसो हार्म्मे हाशब्देन विनाशनम्।
आगतानाञ्च हानिः स्यात् पक्षपातं गतो जयः ॥ १३ ॥
ऌशती निजगेहस्था उल्वणव्याधिपीड़नम्।
उत्साहध्वंसशून्यस्य पाठे पाण्डित्यमुल्वणम् ॥ १४ ॥
दीर्घल्टकारवर्णञ्च लावण्यलोचनो नृपः।
लज्जानष्टं क्षेमवृद्धिमिन्द्रतुल्यप्रियो भवेत् ॥ १५ ॥
दीर्घप्रणवमोङ्कारे निराश्रयो न जीवति।
महदाश्रयमात्रेण सर्वं चूर्णं करोति हि ॥ १६ ॥
सिंहे कार्मुकमेषलग्नसमये नित्याशिषं प्राप्नुयात्
किञ्चिज्ज्ञाति पराक्रमी गतिमतां श्रेष्ठो भवेत् कर्मणि।
किञ्चिद्दोषकुलापहं नरपतेरुत्साहसंवर्द्धनम्
क्रोधी नित्यपराक्रमी भवति सः शौचाभिलाषान्वितः ॥ १७ ॥
अथ वक्ष्ये महादेवि! वीराणामुत्तमोत्तमे।
सर्वशास्त्रार्थभावज्ञे! तत्त्वज्ञानपरायणे! ॥ १८ ॥
दक्षिणस्थदलस्यापि वर्णभेदार्थनिर्गमम्।
फलमत्यन्तनिष्कर्षं वाञ्छावाक्यफलप्रदम् ॥ १९ ॥

कान्ते बीजे कमलनिलयागेहभागस्थिरायां
नानादेशभ्रमणभयदा नैव कुत्रापि सुस्था।
चण्डोद्वेगापहसति खलानाञ्च हानिः प्रवृद्धो
वाणी वश्या वसति वदने चक्रिणां हानयः स्युः॥ २०॥
चारुप्रतापं चरणे गुरूणां भक्तिर्दृढ़ा स्याद् गमनेषु चारुः।
तदा गतानां नृपतिप्रियाणां संप्रेरणं चारुफलञ्च कूटे॥ २१॥
क्रान्तेषु कान्तावदनारविन्दे स्पष्टं पटुत्वं रमणीविलासम्।
आयुच्चयोद्वेगविनाशकारणं चाकर्षणं देशसुखं धनानाम्॥२२॥
टकारे धारणं देशे च्चयं शेषे विना सुखम्।
विदेशस्थधनादीनां स्यादागमनमुत्तमम्॥ २३॥
दकूटमधनं विना भवति विघ्नहानिः सदा
जयं स्वगृहकामिनीकमलनेत्रकान्ता यथा।
सुसिद्धकरमेव हि प्रवललाभभावो भवेद्
भवे जयति मानुषसप्तमलग्न प्रश्नजिज्ञासने॥ २४॥
व्याख्यातं मुनिभिः फलं फलमयं कालं रिपूणां सदा
लोकानां वशकारणं कुलवरो वेदागमे पारगः।
प्राप्नोति प्रियपुत्रकं नरपतेरुत्साहसंकारणं
कार्य्ये दुर्जनपीड़नं भयसमूहानां विनाशं स्वके॥ २५॥
यशसि वयसि तेजो बुद्धिरेवं मकूटे
समय फलदभूपो नाशबुद्धिः समुद्रा।
यजनमपि सुराणामर्थ्यमातं न भूयात्
अतिशयधनवृद्धिः क्रयविक्रयकाले॥ २६॥
शीतकाले धनप्राप्तिः स्वर्णरौप्यादिलाभकम्।
पुत्रप्राप्तिः सुखप्राप्तिः सङ्कटे वदति ध्रुवम्॥ २७॥
लक्ष्मीः प्रियं धनं दातुमुदिता भूमिमण्डले।
जलेन जायते हानिर्लयं देवेन कूटके॥ २८॥

प्रश्नाद्यचरमित्यादि स्वरमूलं हि यो नरः ।
जिह्वासनं यदा कुर्य्यात्तदा स्यादुत्कटं फलम् ॥ २९ ॥
शृणु तत्तत् स्वरं नाथ ! एतत् पञ्चममाजयम् ।
इकारकूटमङ्गले धनादिलक्षणयान्वितः ॥ ३० ॥
विशेषधर्म्मलक्षणं धनञ्च पैत्रिकं लभेत् ।
गतिप्रियं सुदेवता सुसम्पदं सदा सुखम् ॥ ३१ ॥
तथा हि सूक्ष्मबुद्धिभिः परास्तमाकरोदरिम् ।
ऋकारमपरप्रियं परमभक्तसन्दर्शनम् ॥ ३२ ॥
विदेशगमनं न हि प्रभूतराज्यसम्पदः ।
दया जगज्जनमतिप्रियं तरुणदोषसम्माननम् ॥ ३३ ॥
विकाररहितं सुखं सकलप्रश्नयुग्मोदये ।
तयोजे बहुसन्तोषं कामनाफलसिद्धिदम् ॥ ३४ ॥
वायूनां हरणञ्चैव प्राप्नोति नृपमानसम् ।
असीत्येकाचरे वीजे वीजभूते जगत्पतिः ।
प्राप्नोति कन्यादानादिफलं वस्त्रञ्च तैजसम् ॥ ३५ ॥
गोकन्या मकरे खगे खररता सौन्दर्य्यलक्ष्मीर्भवेत्
मेषे काञ्चनपुञ्जलाभमतुलं सन्तोषसारं गतौ ।
संसारे निजदायिकाम्बजनता रत्नादिकं सञ्चयम्
सर्वं सञ्चयति प्रभो ! हितकरं प्रश्नार्थमाद्यचरे ॥ ३६ ॥
तृतीयदलराहित्यं यद्वा वर्णं विचारयेत् ॥ ३७ ॥
प्रश्नाद्यचरवर्णेषु नीत्वा च गणनं चरेत् ॥ ३८ ॥
तत्प्रकारं शृणु प्राणवल्लभ ! प्रेमपारग ! ॥ ३९ ॥
यज्ज्ञानात् प्रश्नसिद्धिः स्यादकालफलदं नृपम् ।
दृष्ट्वा ज्ञात्वा भावशुद्धिमुत्तमाधममध्यमम् ॥ ४० ॥
लोकभावविधानज्ञो निजवृत्तादिकं तथा ।
सर्वं विषयरूपेण भावसारं विचारयेत् ॥ ४१ ॥

गवीजं मङ्गलं ज्ञेयं फलमत्यन्तभाग्यदम्।
गतद्रव्यादिलाभश्च तथा लोकवशं फलम्॥ ४२॥
ड्कारकूटे कठिनं रिपूणां विद्रावणं धर्म्मविनाशकस्य।
भूमिपतेर्वा शरणं विनाशनं दिव्याङ्गनाया वररत्नलाभम्॥४३॥
टकारे दूरगाणाञ्च दर्शनं भवति ध्रुवम्।
उद्वाहं पुत्रसम्पत्तिः षष्ठमासेन लभ्यते॥ ४४॥
टान्ते चौरभयं नास्ति तद् द्रव्यागमनं भवेत्।
विधिविद्याप्रकाशेन शिवे विष्णौ च भक्तिमान्॥ ४५॥
धकारकूटे धरणीपतेर्वा व्याधेर्भयं नास्ति तथा पशोश्च।
प्रवेशमात्रेण गतौ कलापि जीवादिसम्पत्तिमुपैति लक्ष्मीम्॥४६
रवौ सिद्धिः सम्यक् खलकुलवरो धीरगमनं
वाञ्छातुल्यं विभवमतुलं राजराज्यप्रियं स्यात्।
प्रतापं सन्त्याज्यं सकलहितगोलोकरसता
रसं सर्वं प्रियमतिसुखं लाभविविधम्॥ ४७॥
वकारे वह्निवीजे च जितं सर्वं चराचरम्।
यथा जयेन सर्वत्र गमने भाग्यदं फलम्॥ ४८॥
षकारमध्यमे देशे वार्त्तादेशादुपैति हि।
पत्रिकागमनं क्रियं यः करोति धनं लभेत्॥ ४९॥
चकारे सख्यभावञ्च मित्रभावं दयां लभेत्।
अप्रीतिश्च भवेत्तस्य तदा प्राणभयं न च॥ ५०॥
स्वराज्ये च भवेत् सौख्यं प्रश्नजिज्ञासकर्म्मणि।
हसनान्ते तथा वर्णे पाचकादिह चादिमम्।
यदि स्यादुच्यते नाथ! विपरीतफलं न च॥ ५१॥
दीर्घे काले विषयघटना नाथ! पादे मतिः स्यात्
यद्यारम्भो भवति कुलनं दीर्घजीवी नरेन्द्रः।
बालापत्यं गमयति मुदा कालदेशाधिकारी

लोकारण्ये सकलकलुषध्वंसहानौ मृगन्ते ॥ ५२ ॥
सुखञ्चचार चाष्टमे महाधनेशसन्निधौ ।
प्रबुद्धवान् भवेन्नरः समाहितो भवेद् ध्रुवम् ॥ ५३ ॥
विचित्र चातुरी यदा महाकुचोरगा प्रभो ! ।
प्रहस्यते क्षणादपि प्रभातसूर्य्यदर्शनात् ।
अतीव धैर्य्यतां लभेत् विचित्रवाग् भवेज्जयः ॥ ५४ ॥
जयेन सेवितं पुरा
न वाक्यलाभकं जगज्जनादिसेवनं लभेत् ।
कुलागमं गया सुधीः गभीरतुल्यसत्फलम्
सदा हि पुण्यसागरे गुरोः पदाम्बुजं लभेत् ॥ ५५ ॥
विसर्जनीयसमये समाप्ति कोमलान्वितम् ।
जनागमं धनागमं विशालवेदनान्वितम् ॥ ५६ ॥
मनोगतं कुबुद्धिदं सुखायुबन्धुसज्जनम् ।
कुलक्षणं भवे लभेत् कुबन्धनम् ॥ ५७ ॥
सकुलं निष्कुलं कान्तं वित्तश्रेष्ठा महर्षयः ।
हास्यमुखे हास्यफलं भावनायां भवेन्न हि ॥ ५८ ॥

क्रोधक्रमेणैव तदैव चक्षुषोः
विकारभावेन हरेत् समस्तम् ।
शीर्षे करौ चेत् कलिकालसंयुतं
फलं हि लाभे वध एव भूषणम् ॥ ५९ ॥

शेषे वेददले च भावय करा हारावशब्दापहा
दूरादागमनं भवेद्धि नियतं बालागणैरावृतम् ।
घोरापायविसर्जनं जलगुणाह्लादेन सामोदितम् ।
कूपे कूपमकारवर्गलहरी भासापभासारसे ॥ ६० ॥
जवर्गे जतुकं वर्णं जीवनोपायचिन्तनम् ।
नराव्याधिसमाक्रान्तं जीर्णवस्त्रापहारणम् ॥ ६१ ॥

ठकारकूपे यदि चक्रवर्त्ती भूमण्डले स्यात् पततीति निश्चितम्।
अन्तःसुखं हन्ति यदादि भागे ठकारमात्रेण विभूत्तमो भवेत्॥६२
आद्यप्रश्नाक्षरं नाथ! भकारं तरुणाश्रयम्।
पापान्धकारपटलध्वंसाय कल्पते तदा॥६३॥
नकारमाद्ये यदि प्रश्नवाग्मी जिज्ञासमानो ध्रुवमर्थसञ्चयम्।
आलापमात्रेण वशाः स्युरेव प्रवेशनं राजकुलेन्द्रसन्निधौ॥६४॥
भीतो भवति देशे च भयस्थाने न दुःखभाक्।
भूषासम्पं ...क्ष नकारकूटमङ्गले॥६५॥
लोकानुरागं सर्वत्र आद्यक्षरविराचतः।
खकारस्यापि लोकेश! भार्य्या दुःखं विमुञ्चति॥६६॥
सकारे मैथुनं कान्ताकुलस्य कुलवर्द्धनम्।
धनवृद्धिर्वंशवृद्धिः सरस्वतीकृपा भवेत्॥६७॥
वेदपत्रे अकारस्य फलमाहात्म्यनिर्णयम्।
शृणु नाथ! प्रवक्ष्यामि सावधानावधारय॥६८॥
ककारादि क्षकारान्तं व्याप्य तिष्ठति तत्त्वतः।
अकारेण विना शक्तिर्जायते कुत्र न प्रभो!॥६९॥
अकारे ग्राह्य तं सर्वं चराचरकलेवरम्।
यद्यकारमाद्यभागे प्रश्नजिज्ञासने भवेत्॥७०॥
कुफलेऽपि सत्फलानां सञ्चयं भवति ध्रुवम्।
शत्रूणां वासहेतोर्यादीनाञ्चैव सञ्चये॥७१॥
अन्तर्यजनविद्यासु लोकस्यागमने तथा।
निजदुःखानुतापे च अकारविधिरुच्यते॥७२॥
उकारफलमाहात्म्यं शृणु प्रश्नार्थपण्डित!।
उषाकाले चौर्य्यप्रश्नं मल्लासं मानसोत्तमम्॥७३॥
उत्तमस्थलवासञ्च उत्कृष्टभोजनादिकम्।
उल्वणा बुद्धिरुत्पत्तिरुषादेवीपदे सति॥७४॥

लृकारणकुलं चक्षुः शब्दस्य वचनं भवेत्।
लोचने दर्शदं स्त्रीणां लिखनं दूरसम्भवम् ॥ ७५ ॥
प्राप्नोति परमां लक्ष्मीं लोकवश्याय केवलम्।
अङ्गनानां सञ्चयश्च भूमिलाभो भवेद् ध्रुवम् ॥ ७६ ॥
ओकारे बाह्यबुद्धिः स्यात् पुत्रवृद्धिस्तथैव च।
सदा सन्तोषमाप्नोति प्रणवः सर्वसिद्धिदः ॥ ७७ ॥
मीने कर्कटराशिवृश्चिकतुले धर्माग्निभानूदये
गेहे वेदविचारणे शुभफलं स्त्रीलाभतः सन्ततिः।
विद्यावेदकथादिकं जयवतामानन्दसिन्धोः फलम्
प्राप्नोति प्रतिपत्तिसिद्धपदवीं मर्त्यो मुदा हर्षणम् ॥ ७८ ॥
पत्रप्रमाणं कथितं हीनविद्याविनिर्गमम् ॥ ७९ ॥
पुनः शृणु महाकाल ! कलिकालस्य उद्भवम् ॥ ८० ॥
यद् यन्मासस्य प्रथमे तथा चाङ्कोर्भकस्य च।
दण्डद्वये शुभफलं प्रथमस्य महेश्वर ! ॥ ८१ ॥
तृतीयैकदण्डमात्रं विपरीतफलप्रदम्।
तत्र दण्डेषु नक्षत्रं पूर्वप्रथमपत्रके ॥ ८२ ॥
तत् सुतारं विजानीयात् दुष्टदोषे सुखं भवेत्।
अश्लेषाभादिचित्रान्तं द्वितीये दक्षिणे दले ॥ ८३ ॥
तत् फलं विपरीताख्या सफले विफलापहम्।
तत् सुतारं विजानीयात् दुष्टदोषे सुखं भवेत्।
स्वात्यादि वसुनक्षत्रं तृतीयाधोदले लिखेत् ॥ ८४ ॥
तत् सुतारं क्रमाज्ज्ञेयं नान्यथा भावमानयेत्।
तत् फलार्थं कुत्सितञ्च विपरीतफलस्थले ॥ ८५ ॥
अशुभं सत्फलस्थाने कुफलेषु फलं लभेत्।
उत्तराषाढ़के तारादिरेवत्यन्तमेव च ॥ ८६ ॥
तत् फलन्तु भवेत् सद्यो यदि कर्मपरो भवेत्।

अथ वक्ष्ये महादेव ! अश्विन्यादिफलं प्रभो ! ॥ ८७ ॥
यज्ज्ञात्वा देवताः सर्वा दिग्विदिक्षादिरक्षकाः ।
तत्प्रकारं महापुण्यं देवदेव ! फलोद्भवम् ॥ ८८ ॥
त्रैलोक्ये सौख्यपुञ्जं त्रिभुवनविदितां त्रैगुणाह्वयसिद्धां
सिद्धभ्रान्तौ विशालो वरदविदलितां वेदनाद्रोपहन्नाम् ।
मन्दानां मन्दभाग्यापहगुणहलनां हीनदीनापदाद्यां
लोकानां सत्फलानां फलगतवपुषा साश्विनौसा ददौ चेत् ८९
एवं क्रमेण देवेश ! तारकानां फलाफलम् ।
पुनः पुनः शृणु प्राणवल्लभ ! प्रेमभावक ! ॥ ९० ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे महातन्त्रोद्दीपने भावनिर्णये पाशव-
कल्पे आज्ञाचक्रसारसङ्केते सिद्धमन्त्रप्रकरणे भैरवीभैरव-
संवादे त्रयोदशः पटलः ॥ १३ ॥

---

## अथ चतुर्दशः पटलः ।

आनन्दभैरव-उवाच ।

अथातः संप्रवक्ष्यामि योगमार्गेण शङ्कर ! ।
भरण्यादि सप्तविंशान् नक्षत्रार्थं सुसत्फलम् ॥ १ ॥
तत् फलाफलमाहात्म्यं साक्षात्कारफलाफलम् ।
फलार्थं भरणीक्षेत्रं धर्मविद्यादिनिर्णयम् ॥ २ ॥
धर्मचिन्ताविनिर्बोधं गमनाभावमङ्गलम् ।
मकारादिवर्णजालं प्राप्नोति भरणीभके ॥ ३ ॥
कृत्तिकायाः शादिवर्णं व्याधिशङ्करसंचयात् ।
आरोग्याय धनस्यार्थे तत्र सूर्य्यं न चाचरेत् ॥ ४ ॥
या रोहिणी धनवतां धनहानयो नं
प्राणप्रियं गणसुबद्धविवृद्धिबुद्धिम् ।

नागादिदोषगमनं चितिचक्रमध्ये
राजश्रियं विविधसिद्धिमुपैति वृद्धिम् ॥ ५ ॥
मृगेन्द्रशीर्षगामिनी नरेन्द्रमन्दिरे निधिं
ददाति पापनिर्मले जले जघन्यशून्यके ।
भयं विवाहकालके चपे सुखं शुभेच्छया
स्वकीयकिल्बिषं दहेदनन्तबुद्धिसञ्चयः ॥ ६ ॥
आर्द्रा विद्रुमरूपिणी रतिकलाकोलाहलोल्लासिनी
सा सत्यार्पणमेव संप्रकुरुते काले फलालापनम् ।
सौख्यं मुख्यसमृद्धिदा दरदलाम्भोजावृता निष्पटा
साधारं परिवक्ष्यति प्रतिदिनं श्रान्तं दुश्रान्तं दहेत् ॥ ७ ॥
पुनर्वसुसुतारिका तरुणरूपकृपाकृपा
विशिष्टफलभावनारहितचित्तदोषापहा ।
धनमन्तपरिमाणगं प्रचुरशोकसङ्गापहा
प्रयच्छति महाग्रहः परमपीड़ितं मानुषम् ॥ ८ ॥
सुध्या पौषमनाः करोति सहसा तेजस्विनां कान्तिदा
कान्तायाः कनकादिलाभविपदां ध्वंसिन वंशादिदा ।
बाधायां फलदा मृगा मृगपतेरानन्दतुल्यं श्रियं
काद्या पञ्चमवर्णज्ञानललिता पातीह पुत्रं यथा ॥ ९ ॥
एतद्धि पूर्वपत्रान्ते तारामङ्गलदायिकाः ।
प्रतिभान्ति यथा चक्रे ग्रहाणां भ्रामणे शुभे ॥ १० ॥
विपरीतफलं नाथ ! प्राप्नोति पातकं बहु ।
पुष्यायां न भवेत् क्रूरः कर्कटस्थोऽपि भास्करः ॥ ११ ॥
एतासां तारकाणाञ्च राशिदेवान् शृणु प्रभो !
मेषः सिंहो धनुश्चैव अश्विन्यादिकदेवताः ॥ १२ ॥
येषां राशिस्थितं वर्णं न हानिर्विषयास्पदे ।
सर्वत्र जयमाप्नोति ग्रहे क्रूरेऽपि सौख्यदः ॥ १३ ॥

विभिन्नराशौ शोभिन्ना धर्मनिन्दाविवर्जितः।
स्वनक्षत्रफलं ज्ञात्वा प्रश्नार्थं कोमलं वदेत् ॥ १४ ॥
तत्तन्नक्षत्रसुफलं कुफलं वा भवेद् यदि।
तदा वर्णविचारञ्च कृत्वा प्रश्नं तदा वदेत् ॥ १५ ॥
अक्षमालाक्रमेणैव तद् वर्णानां विचारतः।
तत्तद्वर्णविचारे तु यद् यत् सौख्यं प्रवर्त्तते ॥ १६ ॥
अधिके दोषजाले तु अधिकं दुःखमेव च।
बहुसौख्यं नित्यसौख्यं प्राप्नोति साधकोत्तमः ॥ १७ ॥
एतासां तारकाणान्तु वर्णान् गृह्णन् यथा क्रमात्।
रव्यादि रविवारान्तं ताराणामधिपं शुभम् ॥ १८ ॥
अशुभञ्च तथा रुद्र! ज्ञात्वा प्रश्नार्थमावदेत्।
तद्वारनिर्णयं वक्ष्ये पूर्वपङ्केरुहे दले ॥ १९ ॥
रवौ राज्यं बालकानां यदि प्रश्नं प्रियं फलम्।
धर्मार्थलाभमेवं हि त्रयोविंशाधिके नरे ॥ २० ॥
संस्थितं परमानन्दं योगिनस्तत्त्वचिन्तनम्।
इत्यादि रविवारस्य वृद्धानामशुभं भवेत् ॥ २१ ॥
सोमे रत्नमुपैति देवकुसुमामोदेन पूर्णं सुखं
बालायां नवकन्यका शुभफलं मुद्राभयार्थं लभेत्।
कैवल्यार्थविचेष्टनं नृपवधूप्रेमाभिलाषं सदा
वाञ्छापुण्यसुखास्पदेषु विमला भक्तिश्च सोमे दिने ॥ २२॥
पृथ्वीपुत्रो रुधिरवदनो बालबालोविशेषो
मुख्यं कार्य्यं दहति सहसा साहसं वासनायाम्।
हन्ति प्रायो विफलघटितं शोकसन्तानसारं
मुख्यं पुण्यं घटयति सदा मङ्गले भूमिवारे ॥ २३ ॥
बुधे वारमुख्ये महाधर्मपुञ्जं समाप्नोति मर्त्यस्तथा दुर्बलञ्च।
सदा कालदोषं महाघोरदुःखं रिपूणां धनिनां महावीर्य्यदर्पम्२४

सुराणां दैवाद् विविधधनलाभं वितरणं
प्रतापं सत्कीर्त्तिं क्रतुफलविशेषं विधिगतम् ।
जनानामानन्दं समरवसतानन्दहृदयं
प्रतिष्ठा साधर्म्यं गमयति मुदा वासनगृहे ॥ २५ ॥

मन्दारमाला चयदेहधारी नाकस्थले गच्छति देवनिष्ठः ।
हरेः पदे भक्तिमुपैति सत्यं प्रसाधनात् शुक्रसुतारकाले ॥२६॥

शनैश्चरदिने भयं गुरुजनेषु दोषान्वितं
क्षितिप्रियसुतप्रियं परमभावकं स्त्रीसुखम् ।
विशिष्टधनदीनो वदन् मरणसिद्धिरर्कं द्यर्कजम् ॥२७॥

भजन्ति यदि मानुषाः सकलकामनावदत्
प्रभाः पुरश्चराचरगं फलमतीव दुःखास्पदम् ।
प्रचण्डकिरणं सदा विकललोकरोगापहं
तमेव परिभावनं परिकरोति यो वा नरः ॥ २८ ॥

न लभ्यते कदाचन प्रचुरतापकारणम् ।
कलाधनफलं शृणु प्रणयवाक्यसूक्ष्माशयः ॥ २९ ॥

समप्रखचराकुलं समप्रखचराफलं फलवतो हि संज्ञाफलम्।
गभीरवचनं नृपप्रियकरस्य रत्नाकरं
यदिह भजनं मुदाकालं शुभादिशम्भोऽकरोत् ॥ ३० ॥

द्वितीयदलमाहात्म्यं नक्षत्रमण्डलायुतम् ।
तत्तत्ताराफलं वक्ष्ये येन प्रश्नार्थनिर्णयः ॥ ३१ ॥

अश्लेषाबहुदुःखवादनगतं व्यामोहशोभावृतं
नाना भृङ्गनिषेवणं धनवतां हानिः पदे सम्पदे ।
भूपालैः परिवर्जनं खलजनैराच्छादितं तापितं
सन्दद्यात् क्षितिजातिकेषु नियतं कोलाहले नारकी ॥३[illegible]

मघायां महेशि ! धनं हन्ति मध्ये
महोल्लासवृद्धिं भयं तस्य शत्रोः ।

क्षितिचोरहन्तारमत्यन्तभावं
कुकामातुराणां सदा सङ्कारम् ॥ ३३ ॥
पूर्वफल्गुनिनक्षत्रदूरगाणां फलं पठेत् ।
अतिधैर्य्यं शत्रुपक्षहानयो यान्ति निश्चितम् ॥ ३४ ॥
कुलमुत्तरफल्गुन्यादियातगतिरीश्वरी ।
यदि देवपरो नाथ ! तदा सर्वत्र सुन्दरम् ॥ ३५ ॥
हस्तासस्तकक्रीड़या शुभविलोकत्रये भाग्यदा
रक्ताङ्गी गतिचञ्चला मलगुणाह्लादेन दाता सदा ।
सदा नित्यं प्रददाति रुक्मशतकं भक्ताय यन्नार्थिने
नाव्यञ्जनभोजनैररतिसुखी शङ्काहं ददेत् ॥३६॥
ददाति वित्तं जगतीह चित्रा मनोरथव्याकुलतामलङ्कृता ॥३७॥
कदाचिदेषा हि शरीरदुःखं न प्राप्नुयादीश्वरभक्तिमालभेत्॥३८॥
अश्लेषानाथ शुक्रो विपदमपि कदा नो ददाति प्रदुःखं
दक्षे पात्रविभावना भयहरा चण्डतापं न हन्ति च ॥३९॥
जीवः श्रीमानमोघं धनदमपि विधिं ब्राह्मणः पीतवर्णम् ।
पूर्वान्ता फल्गुनीशो विधुतनुजवरो नानवर्णः सुपुत्रम् ॥४०॥
कुरुते बहुसुखवित्तं उत्तरफल्गुनीनाथो मङ्गलेन ।
हस्तायाः पतिश्चन्द्रो विभवमनन्तं चित्रेशो रविः ॥ ४१ ॥
अथःस्वातीयपत्रस्य नक्षत्राणि शृणु प्रभो ! ।
यासां वारविशिष्टानां प्रश्ननिष्कर्षसत्फलम् ॥ ४२ ॥
स्वातीं रविः पाति महोग्रतेजसा विनाशकाले विपरीतबुद्धिदः ।
इन्दुर्विशाखां सुखदो भूजोऽनुराधां विपदां पराधीः ॥ ४३ ॥
बुधोहि पायात् सकलार्थसाधनीं
ज्येष्ठां तथा हि मूलां सुखदश्च जीवः ।
तथा धनार्थं प्रददाति शुक्रः
पूर्वान्वितापाटिकयान्वितः सुखम् ॥ ४४ ॥

चतुर्थपत्रं वामस्थं महामङ्गलकारणम् ।
अथर्ववेदस्वरूपं तत् सर्वप्रश्नकथाहृतम् ॥ ४५ ॥
विपरीते महद्दुःखं वर्णसौख्येऽपि हानयः ।
भवन्ति तारका नाथ ! शुभद्रव्यादहोदयाः ॥ ४६ ॥
तत्तारकाणामगुणं शुभाशुभफलप्रदम् ।
प्रश्नवर्णसमूहानां मतमालोक्य निर्णयम् ॥ ४७ ॥
शनिः पात्युत्तराषाढ़ां हानिरूपां विपादकाम् ।
दुःखदारिद्र्यसंयुक्तं देवनिष्ठेन बाधते ॥ ४८ ॥
रविः प्रपाति श्रवणां धनादिभिः प्रधानदेवाश्रयनिर्विकल्पाम्।
तथा धनिष्ठां फलदां सुधीः शुभं कुजो विपत्तिं शतभिक् गणेशः॥४९॥
पूर्वभाद्रपदानाथो बुधः काञ्चनवर्द्धनः ।
तथा लोकं महादेवो पूर्वभाद्रपदापतिः ॥ ५० ॥
बृहस्पतिः सुखोल्लासं रेवतीशस्तथा भृगुः ।
ददाति परमाह्लादं स्वस्वपत्रस्थराशिभिः ॥ ५१ ॥
अभिजित्तारकं पाति शनिः श्रीमान् धनप्रदः ।
फलभागं मुदा दातुं शनौराजा मृगान्तिके ॥ ५२ ॥
तच्चान्ते मितिके सौख्यं वदन्ति परमप्रियम् ।
राहुराजा ग्रहाः चक्रे अभिजित् कालवेष्टितः ॥ ५३ ॥
तत् कालं सूक्ष्मतद्रूपं यो जानाति महीतले ।
सन्ध्याकालमिति ज्ञेयं शनिराहुः सुखन्तयोः ॥ ५४ ॥
तत् सन्धिकालमेवं हि सत्वगुणमहोदयम् ।
तत् कुम्भकं विजानीयान्मदीयदेहसम्भवम् ॥ ५५ ॥
महासूक्ष्मचयं तद्धि कुण्डलीमण्डलं यथा ।
तस्याः प्रथमभागे च धारणाख्यः शनिः प्रभुः ॥ ५६ ॥
स्वयं ब्रह्मा मुदा भाति निरञ्जनकलेवरः ।
तस्मात् शेषे रेचनाख्यः सद्भावारं ग्रहः शुचिः ॥ ५६ ॥

राहुरूपी स्वयं शम्भुः पञ्चतत्त्वविधानवित् ।
कालरूपी महादेवो विकटास्यो भयङ्करः ॥ ५७ ॥
सर्वपापानलं हन्ति चन्द्ररूपी सुधाकरः ।
कृष्णवर्णः कालयमः पुण्यापुण्यनिरूपकः ॥ ५८ ॥
द्वयोर्मध्ये सूक्ष्मरूपा तड़ित्कोटिसमप्रभा ।
महासत्त्वाश्रिता देवी विष्णुमायाग्रहाश्रिता ॥ ५९ ॥
अभिजित्तारका सूक्ष्मा सन्धिकाललया जया ।
कुम्भकाक्रान्तहृदया ग्रहचक्रपुरोगमा ॥ ६० ॥
नक्षत्रमण्डलग्राममध्यस्था तिथिषोड़शी ।
अमामयी सूक्ष्मकला तरुणानन्दनिर्भरा ॥ ६१ ॥
अस्या आद्यभागसंस्थो ब्रह्मरूपी रजोगुणः ।
अस्याः शेषा कालरूपी तमोगुणलयप्रियः ॥ ६२ ॥
चन्द्रो ब्रह्मा शिवः सूर्य्यो महामायातनूत्तरः ।
आत्रेयी परमाशक्तिः सुषुम्नान्तरगामिनी ॥ ६३ ॥
मध्यस्था ब्रह्मशिवयोर्विधिशास्त्रस्य सिद्धिदा ।
ऐन्द्रीयते सर्वसंस्था सर्वानन्दहृदि स्थिता ॥ ६४ ॥
तैरानन्दफलोपेतैः सत्त्वसम्भोगकारिणी ।
महाविष्णुर्महामाया चन्द्रतारास्वरूपिणी ॥ ६५ ॥
मुक्तिदा भोगदा भोग्या शम्भोराद्या महेश्वरी ।
अज्ञानवलता घोरा कालसंहारहंसिनी ॥ ६६ ॥
मन्दवायुप्रिया यस्य कल्पनार्थे च वीरहा ।
सा पाति जगतां लोकान् तस्याधीनमिदं जगत् ॥ ६७ ॥
नाकाले म्रियते कश्चिद् यदि जानाति वायवीम् ।
वायवी परमाशक्तिरिति तन्त्रार्थनिर्णयः ॥ ६८ ॥
सूक्ष्मागमनरूपेण सूक्ष्मसिद्धिं ददाति या ।
नराणां भजनार्थाय अष्टैश्वर्य्यजयाय च ॥ ६९ ॥

कथितं ब्रह्मणा पूर्वं सिद्धाय तनुजाय च ।
लोभमोहभयक्रोधमदमात्सर्य्यकाय च ॥ ७० ॥
तत् क्रमात् परमा प्रीतिवर्द्धनं भूतले प्रभो ! ।
आज्ञाचक्रस्य मध्ये तु वायवी परितिष्ठति ॥ ७१ ॥
चन्द्रसूर्य्याग्निरूपा सा धर्माधर्मविवर्जिता ।
मनोरूपा शरीरं हि व्याप्य तिष्ठति खेचरी ॥ ७२ ॥
आज्ञाद्विदलमध्ये तु चतुर्दशसुदाहृतम् ।
वेददले वेदवर्णं वादिशान्तं महाप्रभम् ॥ ७३ ॥
तदग्निरूपसम्पन्नं ऋग्वेदादिसमन्वितम् ।
शृणु तत्त्वेन माहात्म्यं क्रमशः क्रमशः प्रभो ! ॥ ७४ ॥

इति श्रीरुद्रयामले उत्तरतन्त्रे भावप्रश्नार्थनिर्णये आज्ञाचक्रसारसङ्केते वेदप्रकरणे भैरवीभैरवसंवादे चतुर्दशः पटलः ।

---

## पञ्चदशः पटलः ।

आनन्दभैरव उवाच । देवकार्य्यात् देवशाखा पल्लवं प्रणवं पर
वदामि परमानन्द ! भैरवाह्लाद ! मा शृणु ॥ १ ॥
आद्यपत्रे अकारञ्च ऋग्वेदं परमाक्षरम् ।
ब्रह्माणं तं विजानीयात् आद्यवेदार्थनिर्णयम् ॥ २ ॥
वेदेन लभ्यते सर्वं वेदाधीनमिदं जगत् ।
वेदमन्त्रविहीनो यः शक्तिविद्यां समभ्यसेत् ॥ ३ ॥
स भवेद्धि कथं योगी कौलमार्गपरायणः ।
ब्रह्मस्तोत्रं हि किं ? देवि ! ब्रह्मविद्या च कीदृशी ?
ब्रह्मज्ञानी च को वा स्यात् ? को वा ब्रह्मशरीरधृक् !
तत् प्रकारं कुलानन्दकारिणि ! प्रियकौलिनि ! ।
वद शीघ्रं यदि स्नेहदृष्टिस्त्वेन्मयि सुन्दरि ! ॥ ५ ॥
आनन्दभैरव्युवाच । तदेव ब्रह्मस्तोत्रञ्च वायवीशक्तिसेवनम्

